[illegible]गदा[illegible]र [illegible]च्यविद्या ग्रन्थमाला ५

श्रीमन्महर्षिगौतमप्रणीतं

# गौतमीयतन्त्रम्

सम्पादकः

पं० श्री भगीरथ झा

प्रस्तावना-लेखकः

पं० श्री शेषराजशर्मा रेग्मीः



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी

महाप्रभुलाल गोस्वामी
८/३/८०

॥ श्रीः ॥

कृष्णदास प्राच्यविद्या ग्रन्थमाला
५

महर्षिगौतमप्रणीतं

# गौतमीयतन्त्रम्

सम्पादकः
पं० श्री भगीरथझा न्याय-वेदान्ताचार्यः
( प्रा० निदेशक : कलाविभाग : चन्द्रधारी म्युजियम, दरभंगा )

प्रस्तावना-लेखकः
पं० श्री शेषराजशर्मा रेग्मीः
प्रा० प्राध्यापकः काशी-हिन्दू-विश्वविद्यालयस्य,
नेपालस्थ-त्रिभुवनविश्वविद्यालयस्य च ।



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी
१९७७

THE
KRISHNADAS PRACHYAVIDYA GRANTHAMALA
5

# GAUTAMIYATANTRAM

OF

MAHARSHI GAUTAMA

EDITED BY

Pt. BHAGIRATHA JHA

INTRODUCTION BY

Pt. SHESHARAJA SHARMA REGMI

THE
Chowkhamba Sanskrit Series Office
VARANASI-221001

# प्रस्तावना

आर्यसंस्कृतेराधारस्तम्भौ निगमागमौ संमतौ। कतिपये विद्वांसो वेदं निगमपदेन तन्त्रं चागमपदेन व्यपदिशन्ति। अपरेषां विपश्चितां मते तु निगमागमावुभावपि तन्त्र-भेदे परिगणितौ। अतस्ते गिरिजावर्णितं निगमं गिरीशप्रतिपादितं तन्त्रमागमं कथयन्ति।

तन्त्रपदं सामान्यतया शास्त्रस्य कृते प्रयुज्यते। अतः सांख्यदर्शनं "कपिलतन्त्रं" "षष्टितन्त्रं" वा व्यवह्रियते। एवं च न्यायदर्शनं "गौतमतन्त्रं" मीमांसादर्शनं "पूर्वतन्त्रं" वेदान्तदर्शनं चोत्तरतन्त्रमेतादृशी प्रसिद्धिः। भगवत्पादैः श्रीशङ्कराचार्यैर्बौद्धदर्शनस्य क्षणभङ्गवादो "वैनाशिकतन्त्र" मिति प्रत्यपादि। इत्थमेव षड्दर्शनटीकाकारास्तत्रभवन्त आचार्यवाचस्पतिमिश्राः "सर्वतन्त्रस्वतन्त्रा" इति व्यपदेशमासादितवन्तः।

राजशास्त्रे स्वराष्ट्रचिन्तनस्य कृते "तन्त्र" पदेन व्यवहृतिः। प्रकृते देवानामुपासनादि-प्रतिपादकः शास्त्रविशेषस्तन्त्रम्। यत्र निगमः ( वेदः ) कर्मज्ञानोपासनानां स्वरूपं बोधयति तत्रागमः ( तन्त्रम् ) तेषामेव सरल-साधनानि वर्णयति।

"तनोति विपुलानर्थांस्तन्त्रमन्त्रसमन्वितान्।
त्राणं च कुरुते यस्मात्तन्त्रमित्यभिधीयते॥"

इति कालिकाऽऽगमस्था तन्त्रपदनिरुक्तिः। एवं च—

"आगतः शिववक्त्रेभ्यो गतश्च गिरिजामुखे।
मतः श्रीवासुदेवस्य तस्मादागम उच्यते॥"

इति रुद्रयामलस्थमागमपदनिर्वचनम्। तन्त्रस्य निगमागमयामलडामरादयो बहवो भेदाः। तन्त्रशास्त्रस्य सिद्धान्ततस्तन्त्रग्रन्था अपि वेदतुल्याः सनातनाः प्रामाणिकाश्च। सम्प्रत्युपलभ्यमानेषु बहुषु तन्त्रग्रन्थेष्वाधुनिकेषु सत्स्वपि तत्रस्थाः सिद्धान्ताः सातिशयं पुरातना नात्र कार्ऽपि विप्रतिपत्तिः। किं बहुना, कतिपयेषु वैदिकमन्त्रेषु तान्त्रिका बीजमन्त्रा अनुस्यूता लक्ष्यन्ते। तन्त्रमतमथर्ववेदस्य सौभाग्यकाण्डाद् गृहीतमित्यपि विदुषामभिमतम्। केषुचित्तन्त्रग्रन्थेषु मतस्यैतस्य सङ्केतोऽप्युपलभ्यते, यथा कालीकुलार्णवतन्त्रस्य प्रारम्भ एव "अथाऽत्र आथर्वणसंहितायां देव्युवाचे"ति वाक्यनिर्देशोऽवलोक्यते। इत्थमेव रुद्रयामलस्य पञ्चमे पटले महादेवी "अथर्ववेदशाखिनी"ति पदेन सङ्केतिता।

उपनिषत्स्वपि यत्र तत्र तान्त्रिकतत्त्वानां पर्याप्ता उल्लेखाः समुपलभ्यन्ते । वैष्णवानां परमप्रामाणिके श्रीमद्भागवते महापुराणे भगवता श्रीकृष्णेनोद्धवं प्रति

"वैदिकस्तान्त्रिको मिश्रमिति मे त्रिविधो मखः ।
त्रयाणामीप्सितेनैव विधिना मां समर्चयेत् ॥" ( ११-२७-७ ) ।

इत्युपदिष्टम् । मनुस्मृतेष्टीका-कारेण कुल्लूकभट्टेन तन्त्रं "श्रुति" पदेन व्यपदिष्टम् । तत्रभवता जरन्नैयायिकेन जयन्तभट्टेन स्वकीयायां न्यायमञ्जर्यां नैकविधा युक्तीः प्रदर्श्याऽऽगमप्रामाण्यमुद्‌टङ्कि । एवमेव शैवाचार्यनारायण-कण्ठेन मृगेन्द्रसंहितायाष्टीकायामागमप्रामाण्यं वेदवत्समर्थितम् । महाभारत-स्याऽनुशासनपर्वणि चागमशास्त्रस्य श्रुतिमूलकत्वं समर्थितम् । पूर्वोक्तप्रमाणक-दम्बकेन निश्चीयते यद्वेदाऽनुकूला आगमा वेदतुल्याः प्रामाणिकास्तेषां प्रामाण्ये संशीतिलवस्याऽपि नावकाश इति सुप्रकाशः । सामान्यतस्तन्त्राणि द्विविधानि वेदाऽनुकूलानि वेदविरुद्धानि च । तत्र जैनबौद्धादीनां तन्त्राणि वेदविरुद्धानि ।

आचारदृष्ट्या तन्त्रं पुनस्त्रिप्रकारं—समयाचारतन्त्रं, कुलतन्त्रं मिश्रकं चेति । श्रौतमार्गाऽनुसरणेन श्रीविद्यादीनां प्रतिपादकं समयाचारतन्त्रम् । तत्र वसिष्ठ-संहिता, सनकसंहिता, सनन्दनसहिता, सनत्कुमारसंहिता, शुकसंहिता चेति पञ्च संहिता विश्रुताः । समयाचारस्याऽऽचारपद्धतिर्दक्षिणमार्ग इति नाम्ना प्रथिता ।

कुलतन्त्राणि महामाया-शम्बर-तन्त्रप्रभृतीनि चतुःषष्टि-संख्यकानि । समयाचारतन्त्रं कुलतन्त्रं चाऽनुसृत्य प्रवर्तमानं तन्त्रं मिश्रकतन्त्रम् । कुलतन्त्राऽनु-सारेण वाममार्ग उद्भूत इत्यवसीयते । कुलतन्त्रे मिश्रकतन्त्रे च द्विजातीनां नाऽधिकार इति भगवतः श्रीशङ्करस्य गौरीं प्रति वचनं, तद्यथा—

"कौलमिश्रकमार्गौ हि हेयौ गौरि ! द्विजातिभिः ।" ( ज्ञानार्णवतन्त्रम् )

उपास्यदेवानां भेदैस्तन्त्राणि पुनः पञ्चविधानि । यथा शाक्तं, शैवं, सौरं, गाणपत्यं वैष्णवं चेति । पुनस्तन्त्रस्य प्रस्थानत्रयमद्वैतं, द्वैतं, द्वैताऽद्वैतं चेति । शाक्ततन्त्रमद्वैतप्रधानम् । शैवतन्त्रे द्वैताऽद्वैतप्रस्थानयोः संमिश्रणम् । वैष्णवं तन्त्रं द्वैतप्रधानम् ।

शाक्ततन्त्रे उपास्या देवताः प्राधान्यतो दश महाविद्याः । ता यथा—

"काली, तारा, महाविद्या षोडशी, भुवनेश्वरी ।
भैरवी, छिन्नमस्ता च, विद्या धूमावती तथा ॥
बगला सिद्धविद्या च मातङ्गी, कमलाऽऽत्मिका ।
एता दश महाविद्याः सिद्धविद्याः प्रकीर्तिताः ॥ (चामुण्डातन्त्रम्) ।

शाक्ततन्त्रे प्रधानग्रन्था आगमरूपाः सम्मताः । अगस्त्यमुनिनिर्मितं शक्तिसूत्रं शाक्ततन्त्रस्य मूलग्रन्थत्वेनाऽभिमतम् । सामान्यरूपेण तन्त्र विषये स्वल्पा चर्चाऽऽचरिता प्रकृतविषये किमपि वक्तव्यमवशिष्टम् ।

काश्मीरक-वैष्णवसंप्रदाये क्रमदीपिकाऽतिविश्रुतो ग्रन्थः । एवं च राधातन्त्रं, गौतमीयतन्त्रं कृष्णयामलतन्त्रं चैतानि तन्त्राणि मूलग्रन्थत्वेन विवेचितानि ।

श्रीतत्त्वनिध्यनुसारेण वैष्णवागमाश्चत्वारस्ते यथा--
वैखानसं, पाञ्चरात्रं, प्रतिष्ठासारमेव च ।
विज्ञानललितं चेति चत्वारो वैष्णवागमाः ॥ "इति ॥

उपर्युक्तसमयाऽभावात्तन्त्राणामतिसमासतो वर्णनमकारि । गौतमीयतन्त्रे विशेषविवरणं पश्चाद्विधास्यामीति निवेदयन्विरमामि बहुविस्तरादिति शम् ।

कार्तिककृष्ण--
गोवत्स-द्वादशी
वि० सं० २०३३

विद्वद्विधेयः—
—शेषराजशर्मा
ब्रह्मघट्टम्, वाराणसी ।

# भूमिका

॥ श्रीराधामाधवाभ्यान्नमः ॥

इह हि विविधचमत्कारपूर्णविलासमयलीलाशक्तिमतो भगवतो बहिरङ्ग-विहारभूमौ त्रिगुणमये सुखदुःखमोहात्मके जगति तस्यैव भगवतो लीला-शक्तेरंशांशभूतायाः व्यामोहिकामायाया वृत्तिविशेषभूतयाऽविद्यया तस्यैव भगवतः शक्तिविशेषरूपांशात्मानो जीवा अनादितः संसरन्ति । यद्यपि ते तस्यैव भगवतः परमात्मनः निजस्वरूपांशभूतत्वात् स्वभावतो भगवानिव सच्चिदानन्दघना अपहतपाप्मत्वादिगुणाष्टकपूर्णा एव । तथापि लीलाविशेषभावनया स्वयं भगवतैव व्यामोहिताः सन्तो जगद्व्यापारे स्वांशिभूतं भगवन्तमननुभूय तिरोहित-ज्ञानानन्दस्वरूपाः सुखदुःखमोहात्मके संसारे नट एव नानाविग्रहरूपवेशैः स्वांशिभूतं भगवन्तमनुरंजयन्तः तस्मिन्नेव सुखलवे क्रीडन्तः न ततो विरन्तु-मिच्छन्ति । यथा माता वात्सल्यरसपूर्णा अपि पट्टाञ्चलेन स्वमुखमाच्छाद्य शिशुभिः क्रीडन्ती शिशूनपि क्रीडयति । अत एव नैतावता भगवतो वैषम्यनै-र्घृण्यादिदोषगन्धलेशोऽपि । यथोक्तं परमाचार्येण भगवता बादरायणेन वेदान्त-सूत्रगणे 'लोकवत्तु लीलाकैवल्यम्' ( ब्र० सू० अ० २।१।३३ ) इति । भगवता पराशरेणापि विष्णुपुराणे—

'व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः काल एव च ।

क्रीडतो बालकस्येव चेष्टां तस्य निशामय ॥' (वि० पु० अ० १।२।१८)

इत्याद्युक्तम् ॥

लीला तु भगवतो निरतिशयानन्दरूपस्य निजनिरतिशयानन्दोल्लासरूपै-वान्तरङ्गबहिरङ्गभेदेन द्विविधा तत्रान्तरङ्गा निरतिशयाह्लादमयी नित्यमुक्त-बद्धमुक्तमसंसारिकरैः सह वास्तवी परमव्योम्नि । बहिरङ्गा तु सुखदुःखमोहमयी प्रपञ्चाधिकरणा व्यावहारिकी मायामयी यत्र बद्ध-जीवा आविमोक्षात् विहर-न्ति । तत्र तेषामभ्युदयनिःश्रेयसलाभाय भगवत आदेशभूताः श्रुतयः स्मृतयः पुराणानि विविधा आगमाश्च तत्तद्गुणप्रधानाः तत्तद्गुणप्रधानानां जीवाना-मुपकाराय तत्तदधिकारा प्रवर्तन्ते । तत्र ये भगवदुपदिष्टा अन्तरङ्गलीलायां झटिति प्रवेशाधिकारिणः व्यावहारिकलीलातः उपरताः सात्त्विका जीवाः तेषां कृते सर्ववेदस्मृतिपुराणसारभूतं सत्त्वगुणप्रधानं शास्त्रम् । तदेव सात्वत-शास्त्रं भागवतशास्त्रं पञ्चरात्रं चाख्यायन्ते । "तन्त्रं सात्वतमाचष्टे नैष्कर्म्यं कर्मणां यतः" (भाग० स्कं० १ अ० ३) । संसारहेतुभूतानां पुण्यापुण्यकर्मणां समूलानां सर्वथा निर्हारो नैष्कर्म्यम् ।

ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये ।

अञ्जः पुंसामविदुषां विद्धि भागवतान्हि तान् ॥ (भा० स्कं० ११।२।३४)

पञ्चरात्रस्य कृत्स्नस्य वक्ता तु भगवान् स्वयम् ॥ ( महाभा० शा० प० ) इत्यादि । तच्च पञ्चरात्रं नारदपञ्चरात्र-हयग्रीवपञ्चरात्र-कपिल-पंचरात्र-शिवपञ्चरात्रादिभेदेन पञ्चविधम् । "पञ्चकं पञ्चरात्राणां कृष्णमाहात्म्यसंयुतम् ।" इति प्रामाणिकवाक्यात् ।

यत्तु कैश्चिद्भगवतो वासुदेवात् संकर्षणात्मनो जीवात्मनः उत्पत्तिमाक्षिप्य पञ्चरात्रस्य तदंशतोऽप्रामाण्यमुद्घोषितम् । तत्सम्प्रदायविशेषपरिकल्पनामात्रम् । यतः पञ्चरात्रशास्त्रेऽपि जीवात्मनः उत्पत्तिविनाशरहितं नित्यत्वमेव बहुश उपपादितम् । तेनोत्पत्तिवाक्यं क्वचिदुपलभ्यमानं निःसरणमात्रपरम् । यथा शतपथब्राह्मणे माध्यन्दिनीये बृहदारण्यके—

'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एत आत्मानो व्युच्चरन्ति ॥ (शत० ब्रा० कां० १४ अ० ५ ब्रा० १ कं० २३) ॥

इत्यादौ व्युच्चरणश्रुतिः । तदेतत्स्पष्टमुपपादितं श्रीभाष्यादौ । अत एव बृहत्-पराशरीयस्मृतौ योगियाज्ञवल्क्यस्मृतौ श्रीभागवतादिसात्त्विकपुराणादौ च बहुमानपुरस्सरं भगवदुपासनायां पञ्चरात्रं समुपबृंहितं दृश्यते । महाभारते तु शान्तिपर्वणि मोक्षधर्मे नारायणीये महता प्रपञ्चेन पञ्चरात्रमाहात्म्यं निरूपितम् ।

किं च यदंशमादाय पञ्चरात्रस्यांशतः अप्रामाण्यमुद्घोषितं कैश्चित्, तदंशमादायैव सर्वशिष्टैः परिगृहीते समग्रज्योतिषशास्त्रमूलभूते भगवत्सूर्यमुखनिःसृते अद्यावधि सर्वधार्मिकव्यवहारमूलभूते सूर्यसिद्धान्ते रहस्याध्याये तदंशानुसारेणैव जगत्सृष्टिः प्रतिपादिता दृश्यते । तथाहि—

इति भक्त्योदितं श्रुत्वा मयोक्तं वाक्यमस्य हि ।
रहस्यं परमाध्यायं तत आह पुनः स्वयम् ॥
शृणुष्वैकमना भूत्वा गुह्यमध्यात्मसंज्ञितम् ॥
प्रवक्ष्याम्यतिभक्तानां नादेयं विद्यते मम ॥
वासुदेवः परं ब्रह्म तन्मूर्तिः पुरुषः परः ।
अव्यक्तो निर्गुणः शान्तः पञ्चविंशात्परोऽव्ययः ॥
प्रकृत्यन्तर्गतो देवो बहिरन्तश्च सर्वगः ।
संकर्षणोपः सृष्ट्वादौ तासु बीजमवासृजत् ॥
तदण्डमभवद्धैमं सर्वत्र तमसाऽऽवृतम् ।
तत्रानिरुद्धः प्रथमं व्यक्तीभूतः सनातनः ॥
हिरण्यगर्भो भगवानेष च्छन्दसि पठ्यते ।
परं ज्योतिस्तमसपारे सूर्योऽयं सवितेति च ॥

इत्यादि ।

मैथिलनिबन्धकृत्सु प्राचीनतमैः श्रीदत्तोपाध्यायैः छन्दोगाह्निके पाञ्चरात्रस्य कृत्स्नशः प्रामाण्यं समर्थितम्। अन्यैरपि मैथिलनिबन्धकृद्भिस्तथैव समर्थितम्। वीरमित्रोदयेऽपि तथैव समर्थितम्। तेन पञ्चरात्रस्याप्रामाण्यं सम्प्रदायविशेषपरिकल्पितमेवेति निर्मत्सरैः सुधीभिरवधेयम्।

तच्च पञ्चरात्राख्यं सात्वतशास्त्रं नारदपञ्चरात्रहयग्रीवपञ्चरात्रकपिलपञ्चरात्रादिभेदेन पञ्चविधम्। "पञ्चकं पञ्चरात्राणां कृष्णमाहात्म्यसंयुतम्" इतिप्रामाणिक-वाक्यात्। तेषामेवावान्तरविशेषाः क्रियाकाण्डप्रधानाः गौतमीयतन्त्रसनत्कुमारतन्त्रसात्वततन्त्राः सिद्धान्तप्रधानाश्च ब्रह्मसंहितापौष्करसंहिताऽहिर्बुध्न्यसंहिताद्याः। तदेतत् गौतमीयतन्त्रं विशेषतः अथर्ववेदीयगोपालतापिन्युपनिषदुक्ताष्टादशाक्षरदशाक्षरादिमन्त्रोपासनमधिकृत्य प्रवृत्तम्। यथा—

'तद्विहायाकाशादापो जलात् पृथिवी ततोऽग्निर्बिन्दोरिन्दुः तत्संपातादर्क इति क्लींकारादसृजम्। ( गो० ता० उ० )

'क्लींकारादसृजद्विश्वमिति प्राह श्रुतेः शिरः'। इतिगौतमीय तन्त्रम्।

तेन गोपालतापिन्यादिकृष्णोपनिषदुपदिष्टमन्त्राणां कल्पभूतमिदं तन्त्रम्। अस्मिन् तन्त्रे प्रस्तुतकामबीजप्रसङ्गे—

त्रिपादूर्ध्वं उदैत्पुरुषः इत्याहुः प्रथमागिरः।
बीजोच्चारणमात्रेण चित्स्वभावः प्रजायते॥

इति पुरुषसूक्तमन्त्रेण समन्वयीकरणात् क्लीमित्याद्यस्य मन्त्रस्य सर्वबीजम् पुरुषसूक्तमेवेत्यपि सूचितं तेन सर्वथा महनीयमिदं तन्त्रम्। विशेषतस्तु मत्कृतगोपालतापिनीभाष्ये द्रष्टव्यम्। इति।

तदिदं प्रचलितायुनिके निबन्धे निर्णयसिन्धौ मूर्तिप्रतिष्ठाप्रकरणे देवनाथठक्कुरकृतमन्त्रकौमुद्यां च शारदातिलकक्रमदीपिकाहरिविलासादिग्रन्थे च बहुशः समुद्धृतं समुपलभ्यते तेन नास्य शिष्टपरिग्रहाभावशङ्कावसरः।

तदिदं तन्त्रं प्राचीनहस्तलिखितं द्वात्रिंशध्यायात्मकं सम्पूर्णं श्रीवृन्दावनधामनिवासिना सम्प्रति दिवंगतेन विहारिदासमहानुभावेन श्रीनिम्बार्क-सम्प्रदायानुयायिना 'प्रकाशनाय मह्यं समर्पितं मया च तस्य प्रतिलिपिं विधाय निजसुहृद्वराय माननीयपण्डितश्रीरामचन्द्रझाशर्मणे असंख्यातदुर्लभप्राचीनसंस्कृत-पुस्तक–प्रकाशनलब्ध-पुण्यपुञ्जसंस्थान–चौखम्बासंस्कृतसीरीज-पुस्तक–प्रकाशनकर्मणि कर्मठाय प्रकाशनार्थं समर्पितम्। तदिदं प्रकाशितमित्युपलभ्य महामोदमावहन् सर्वेषां कृतज्ञतामुद्घोषयन् श्रीभगवति समर्पयन् परमसंतोषमनुभवामि।

कार्तिककृष्णा, एकादशी
वि० सं० २०३३

विदुषां वशंवदः—
श्री भगीरथ झा

# विषयानुक्रमणिका

## ( आपाततो मुख्यत्वेन प्रतीयमानानां विषयाणां सूची )

इति शुभम्

—: ० :—

महर्षिश्रीगौतमप्रणीतं

# गौतमीय-तन्त्रम्

## अथ प्रथमोऽध्यायः

सिद्धाश्रमे वसन् धीमान् गौतमो भगवान् मुनिः ।
तपःस्वाध्यायनिरतो भक्तिमान् पुरुषोत्तमे ॥ १ ॥
नमस्यन् शिरसा कृष्णं स्तुवन् वाचा जनार्दनम् ।
जपन् कराभ्यां यज्ञेशं हृदा ध्यायन् सदा हरिम् ॥ २ ॥
समस्तश्रुतितत्त्वज्ञ इतिहासपुराणवित् ।
मंत्रौपधिक्रियासम्यग् योगसिद्धान्ततत्त्ववित् ॥ ३ ॥
धर्मार्थकाममोक्षार्थी नारदं प्राणिपत्य च ।
विनयावनतो भूत्वा पर्यपृच्छद्द्विजोत्तमः ॥ ४ ॥
भगवन् कामदा मंत्राः शत्रूदासीनबान्धवाः ।
विभिन्नफलदास्ते तु नैकत्र फलदा मताः ॥ ५ ॥
एतत्समफलाः सर्वे न मन्त्रा इति नः श्रुतम् ।
येन सर्वफलावाप्तिः सर्वेषां बन्धुरेव यः ॥ ६ ॥
सर्ववर्णाधिकारश्च नारीणां योग्य एव यः ।
तं ब्रूहि भगवन् मन्त्रमल्पायासफलप्रदम् ॥ ७ ॥
तव नाविदितं किंचिद् विद्यते सचराचरे ।
इति श्रुत्वा मुनिश्रेष्ठो नत्वा विष्णुमुवाच ह ॥ ८ ॥
साधु पृष्टं मयाप्येवं पृष्टः प्रोवाच पद्मजः ।
तथा ते कथयिष्यामि यथा प्रोक्तं स्वयंभुवा ॥ ९ ॥
सर्वे कामाः प्रसीदन्ति कृष्णमन्त्रजपाद् द्विज ।
सर्वेषु मन्त्रवर्गेषु श्रेष्ठं वैष्णवमुच्यते ॥ १० ॥
गाणपत्येषु शैवेषु तथा शाक्तेषु सुव्रत ।
वैष्णवेषु च सर्वेषु कृष्णमन्त्राः फलाधिकाः ॥ ११ ॥
विशेषतो दशार्णोयं जपमात्रेण सिद्धिदः ।

मन्त्रस्य ज्ञानमात्रेण लभेन्मुक्तिं चतुर्विधाम् ॥ १२ ॥
अज्ञानतूलराशीनां ज्वलनोऽयं मुनीश्वर ।
अनेन सदृशो मन्त्रो जगत्स्वपि न विद्यते ॥ १३ ॥
अनेनाराधितः कृष्णः प्रसीदत्येव तत्क्षणात् ।
तस्य संक्षेपतो वक्ष्ये सर्वं सम्यक् शृणुष्व मे ॥ १४ ॥
पद्मयोनिरवापाग्र्यं देवराज्यं शचीपतिः ।
अवापुस्त्रिदशाः स्वर्गं वागीशत्वं बृहस्पतिः ॥ १५ ॥
पक्षिणामधिपः सोऽभूत् गरुडोपि द्विजोत्तम ।
कश्चित् कृष्णं समाराध्य धनेशत्वमवाप्नवान् ॥ १६ ॥
मन्त्रेण कृष्णमाराध्य चन्द्रः सर्वजनप्रियः ।
करोति स्ववशे कामः सर्वांलोकाननेन च ॥ १७ ॥
मन्त्राणां परमो मन्त्रो गुह्यानां गुह्यमुत्तमम् ।
मन्त्रराजमिमं ज्ञात्वा कृतार्थो जायते नरः ॥ १८ ॥
पुत्रवान् धनवान् वाग्मी लक्ष्मीवान् पशुमान् भवेत् ।
सुभगः संमतः श्लाघ्यो यशस्वी कीर्तिमान् भवेत् ॥ १९ ॥
सर्वलोकाभिरामः स्यात् सर्वज्ञश्च भवेन्नरः ।
अनेन त्रिषु लोकेषु याता मुक्तिं मुमुक्षवः ॥ २० ॥
मन्त्रेणानेन मंत्रज्ञे भक्तिः स्यात् प्रेमलक्षणा ।
समस्ततीर्थभूतश्च समस्तक्षेत्रपावनः ॥ २१ ॥
रवेरिव दुराधर्षः शुचेरिव शुचिः सदा ।
शंकरस्येव सिद्धीशो विष्णोरिव सदाश्रयः ॥ २२ ॥
बहुना किमिहोक्तेन रहस्यं शृणु गौतम ।
निर्वाणफलदो मन्त्रः किमन्यैर्बहुजल्पितैः ॥ २३ ॥
॥ इति श्रीगौतमीये दशाक्षरफलाध्यायः ॥ १ ॥

---

# अथ द्वितीयोऽध्यायः

गौतम उवाच—

समस्तवेदतत्त्वज्ञ सर्वागमविशारद ।
अधुना ब्रूहि मे ब्रह्मन् मन्त्रराजं दशाक्षरम् ॥ १ ॥

नारद उवाच—

अधुना संप्रवक्ष्यामि विधानं मुनिनिर्मितम् ।
यावन्मन्त्रा ऋषिच्छन्दो देवतान्यनुक्रमात् ॥ २ ॥
खांताक्षरं समुद्धृत्य त्रयोदशस्वरान्वितम् ।
पार्णं तुरीयरयुतं छान्तं धान्तं तथा द्वयम् ॥ ३ ॥
अमृताक्षरमुद्धृत्य चैकतो मां सयुग्मकम् ।
चतुर्थं मुखवृत्तेन पवनः स्वाहयान्वितः ॥ ४ ॥
दशाक्षरमनुः प्रोक्तो दृष्टादृष्टफलप्रदः ।
बीजं शक्तिं च वक्ष्यामि ब्रह्मविच्च परात्परम् ॥ ५ ॥
ब्रह्मार्णं मायया सार्द्धं मन्त्रार्णं नादबिन्दुकम् ।
एतद्बीजं समाख्यातं कृष्णतत्त्वं परात्परम् ॥ ६ ॥
शुक्रार्णममृतार्णेन मुखवृत्तेन संयुतम् ।
गगनं मुखवृत्तेन प्रोक्ता शक्तिः परात्परा ॥ ७ ॥
एषा शक्तिः परा सूक्ष्मा नित्या संवित्प्रदायिनी ।
ईश्वरो जगतां बीजं शक्तिर्गुणमयी त्वजा ॥ ८ ॥
परमात्मा तथा बुद्धिर्वायुः कुण्डलिनीति च ।
चतुर्विधं बीजशक्तिं सर्वमन्त्रेषु चिन्तयेत् ॥ ९ ॥
त्रितयं तत्र सामान्यन्त्वदिदानीं निरूप्यते ।
ईश्वरो जगतां बीजमाद्यं ब्रह्म तदुच्यते ॥ १० ॥
तस्य माया समाख्याता शक्तिर्गुणमयी तु या ।
प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम ॥ ११ ॥
तत्त्वानि चेश्वरश्चैव ब्रह्मेति पञ्चमं स्मृतम् ।
सर्गान्तः पुरुषश्चेति तुर्याख्या प्रकृतिः स्मृता ॥ १२ ॥
तत्त्वानि मांसरूपाणि कालश्च तत्त्वरूपकः ।
ईश्वराख्यो भवेन्नादो बिन्दुश्चैतन्यचिन्मयः ॥ १३ ॥

एतद्विज्ञानमात्रेण जीवन्मुक्तो महीं चरेत् ।
नास्य कालकलापेक्षा न तीर्थायतनानि च ॥ १४ ॥
क्लींकारादसृजद्विश्वमिति प्राह श्रुतेः शिरः ।
[1]ईकाराद्वह्निरुत्पन्नो नादाद्वायुरजायत ॥ १५ ॥
बिन्दोराकाशसंभूतिरिति भूतात्मको मनुः ।
स्वशब्देन च क्षेत्रज्ञो हेति चित्प्रकृतिः परा ॥ १६ ॥
तयोरैक्यसमुद्भूतिर्मुखवेष्टनवर्णकः ।
अत एव हि विश्वस्य लयः स्वाहार्णके भवेत् ॥ १७ ॥
गोपीति प्रकृतिं विद्याज्जनस्तत्त्वसमूहकम् ।
अनयोराश्रयव्याप्त्या कारणत्वेन चेश्वरः ॥ १८ ॥
सान्द्रानन्दपरं ज्योतिर्वल्लभेन च कथ्यते ।
त्रिपादूर्ध्वमुदैत् पुरुष इत्याहुः परमा गिरः ॥ १९ ॥
बीजोच्चारणमात्रेण चित्स्वभावः प्रजायते ।
वल्लभेन तु तद्वाच्यं स्वाहयाऽज्ञाननाशनम् ॥ २० ॥
इत्येवं कथितं तत्त्वं मुने वै ब्रह्मसंमतम् ।
अथवा गोपी प्रकृतिर्जनस्तदंशमण्डलम् ॥ २१ ॥
अनयोर्वल्लभः स्वामी कृष्णाख्य ईश्वरः स्मृतः ।
कार्यकारणयोरीशः श्रुतिभिस्तेन गीयते ॥ २२ ॥
अनेकजन्मसिद्धानां गोपीनां पतिरेव वा ।
नन्दनन्दन इत्युक्तः त्रैलोक्यानन्दवर्द्धनः ॥ २३ ॥
चिन्तयेद्विरजो मंत्री सत्त्वसंपत्तिहेतवे ।
दशानामपि तत्त्वानां साक्षी चेता तथाऽक्षरः ॥ २४ ॥
दशाक्षर इति ख्यातो मन्त्रराजः परात्परः ।
लुप्तबीजः स्वभावत्वाद्दशार्ण इति कथ्यते ॥ २५ ॥
बीजपूर्वजपश्चास्य रहस्यं कथितं मुने ।
नारदोऽस्य मुनिश्छन्दो विराडिति तथा स्मृतम् ॥ २६ ॥
श्रीकृष्णो देवता चास्य दुर्गाधिष्ठातृदेवता ।
महेश्वरमुखाज्ज्ञात्वा यः साक्षात्तपसा मनुम् ॥ २७ ॥
संसाधयति शुद्धात्मा स तस्य ऋषिरीरितः ।
गुरुत्वान् मस्तकं चास्य पुरुषार्थचतुष्टये ॥ २८ ॥
ऋषिछन्दोऽपरिज्ञानान्न मन्त्रफलभाग् भवेत् ।
दौर्बल्यं याति मन्त्राणां विनियोगमजानताम् ॥ २९ ॥

1. ककारात् पृथिवी जाता लकाराज्जलमुच्यते । इति पाठः ।

मन्त्रन्यासमथो वक्ष्ये दृष्टादृष्टफलप्रदम् ।
प्रणवाभ्यां पुटं कृत्वा नमोऽन्तान् दशवर्णकान् ॥ ३० ॥
दक्षाङ्गुष्ठादि वामान्तं न्यासः स्यात् सृष्टिरीरितः ।
वामाङ्गुष्ठादिदक्षान्तं संहृतिः परिकीर्तिता ॥ ३१ ॥
उभयोः करयोर्ज्येष्ठापूर्विका स्थितिरिष्यते ।
संहृतिर्दोषसंघातहारिणी परिकीर्तिता ॥ ३२ ॥
विद्याप्रदा तु सृष्ट्यन्ता वर्णिनां शुद्धचेतसाम् ।
स्थित्यन्ता सा गृहस्थानां त्रयं काम्यानुरूपतः ॥
सहजानां वानप्रस्थे स्थित्यतं कश्चिदिच्छति ।
संहारान्तो मुनीनां च विरक्तस्य च सर्वशः ॥ ३३ ॥
न्यासत्रयं सदा कार्यमशक्तैरेकमेव हि ।
वर्णन्यासं तथा मन्त्री देहे च परिविन्यसेत् ॥ ३४ ॥
हस्तमूले कूर्परके मणिबन्धेऽङ्गुलिमूलके ।
अङ्गुल्यग्रे च विन्यसेत् पादयोरपि विन्यसेत् ॥ ३५ ॥
हस्तमूलादिसृष्टिः स्यान्मणिबन्धात्स्थितिः स्मृता ।
अङ्गुल्यग्रात्संहृतिः स्यात्स्थित्यन्तं त्रितयंन्यसेत् ॥ ३६ ॥
ततः कराङ्गयोर्न्यासस्तथैव परिकीर्तितः ।
आचक्राय तथा स्वाहा अङ्गुष्ठाभ्यां नमो वदेत् ॥ ३७ ॥
विचक्राय स्वाहेति तर्जनीभ्यां तथाचरेत् ।
सुचक्राय स्वाहा मध्यमाभ्यां नमः ॥
त्रैलोक्यरक्षणचक्राय स्वाहेत्यनामिके तथा ॥ ३८ ॥
असुरान्तकचक्राय स्वाहा कनिष्ठयोर्नमः ।
रुक्मिणी प्रकृतिर्वामा साक्षादमृतविग्रहा ॥ ३९ ॥
दक्षिणः पुरुषः प्रोक्तो ज्योतिस्तु विष्णुविग्रहः ।
संयोगात् करयोरेवं परतत्त्वं प्रजायते ॥ ४० ॥
अत एव समस्तानां वस्तूनां शोधनं स्मृतम् ।
पञ्चाङ्गानि ततः कुर्यादङ्गमन्त्रेण देशिकः ॥ ४१ ॥
पञ्चाङ्गानि मनोर्यत्र तत्र नेत्रं विवर्जयेत् ।
आचक्राय तथा स्वाहा शिरसे स्वाहेति संवदेत् ॥ ४२ ॥
शिरसि विन्यसेत्तद्वत्तथैव करशाखया ।
सुचक्राय तथा स्वाहा शिखायैव षडुचरेत् ॥ ४३ ॥
ऊर्ध्वतालत्रयं कृत्वा छोटिकाभिर्दिशो दश ।
बन्धयेन्मुनिशार्दूल नित्यन्यासोऽयमीरितः ॥ ४४ ॥

पूज्यमानो हृदात्माऽयं हृदये सच्चिदात्मकः।
क्रियते तत्परात्मा च हृन्मन्त्रेण च देशिकैः॥ ४५॥
सर्वज्ञादिगुणोत्तुङ्गे सच्चिद्रूपे परात्मनि।
क्रियते विषयाहारशिरोमंत्रेण धीमता॥ ४६॥
हृच्छिरोरूपचिद्धाममयता भावना दृढा।
क्रियते निजदेवस्य शिखामन्त्रेण सादरम्॥ ४७॥
मन्त्रात्मकस्य देवस्य मन्त्रवाच्येन तेजसा।
सर्वतो वर्णमन्त्रेण क्रियते न्याससंभृतिः॥ ४८॥
यद्ददाति परं ज्ञानं सच्चिद्रूपे परात्मनि।
हृदयादिमयं तेजः स्यादेतन्नेत्रसंज्ञकम्॥ ४९॥
आध्यात्मिकादिरूपं यत् साधकस्य विनाशयेत्।
अविद्याजातमस्त्रं तत परं धाम समीरितम्॥ ५०॥

गौतम उवाच—

ब्रह्मन् ब्रह्मविदां श्रेष्ठ सर्वभूतहिते रत।
त्वमेव कृष्ण देवस्य अन्तर्यामी निरामयः॥ ५१॥
अविद्यादोष-निर्मुक्त-समस्तव्रत-संयुतः।
सर्वलोकैकगमक सर्वलोकैकतत्त्ववित्॥ ५२॥
सर्वानुभवसाक्षी त्वं सर्वलोकनमस्कृत।
इदानीं श्रोतुमिच्छामि यदि योग्योस्मि सत्तम॥ ५३॥
भवार्णवनिमग्नं मां त्वमुद्धर्तुमिहार्हसि।
इत्यादिस्तुतिभिः स्तुत्वा प्रणम्य च पुनः॥ ५४॥
पार्श्वमासाद्य तद्वक्त्रमतिरासीन्मुनीश्वरः।

नारद उवाच—

साधु पृष्टं त्वया ब्रह्मन् मयापि ब्रह्मणा श्रुतः॥ ५५॥
मन्त्रराजो मुनिश्रेष्ठ सर्ववेदागमानुगः।
ततः प्रभृति विप्रर्षे हरितामाश्रयानहम्॥ ५६॥
तव स्नेहात् प्रवक्ष्यामि यतस्त्वं पुरुषप्रिय।
क्लींकारपूर्वमुच्चार्य्य कृष्णं तुर्यपदान्वितम्॥ ५७॥
गोविन्दं च तथा चोक्त्वा दशार्णं च तथोच्चरेत्।
भक्त्या ते प्रणिपत्या च कथितो मन्त्रनायकः॥ ५८॥
गुह्याद् गुह्यतरो ह्येष वाञ्छाचिन्तामणिः स्मृतः।
शौनकाद्यास्तु मुनयस्तथान्ये देवमुख्यकाः॥ ५९॥
मन्त्रराजपरिज्ञानात् सद्यस्तत्साम्यमागताः।

कृष्णशब्दश्च सत्तार्थो णश्चानन्दस्वरूपकः ॥ ६० ॥
सुखरूपो भवेदात्मा भावानन्दमयस्ततः ।
गोशब्देन ज्ञानमुक्तं तेन विन्देत तत्प्रभुम् ॥ ६१ ॥
गोशब्दाद्वेद इत्युक्तस्तेन वा लभते विभुम् ।
एवं ते कथिता मन्त्रवासना मुनिसत्तम ॥ ६२ ॥
एतज्ज्ञानानुभावेन जीवन् कृष्णो न चान्यथा ।
किमन्येन बहूक्तेन स्मरणाच्चास्य मन्त्रवित् ॥ ६३ ॥
जीवन्मुक्तो न संदेहो विष्णुरेव न संशयः ।
नारदोस्य मुनिः प्रोक्तो गायत्रीछन्द उच्यते ॥ ६४ ॥
कृष्णः प्रकृतिरेतस्य दुर्गाधिष्ठातृदेवता ।
वासुदेवः संकर्षणः प्रद्युम्नश्चानिरुद्धकः ॥ ६५ ॥
नारायण इति ख्यातः पदपञ्चात्मकः परः ।
अक्षरार्थस्तु कथितः पदसाम. इतीरितः ॥ ६६ ॥
तस्माद्विज्ञाय वै मन्त्री पुरुपार्थचतुष्टयम् ।
लभते नात्र सन्देहः सत्यं सत्यं हि गौतम ॥ ६७ ॥
वीजशक्ती पुरा प्रोक्ते विनियोगश्च पूर्ववत् ।
पञ्चाङ्गानि मनोरस्य पदपञ्चकयोजनात् ॥ ६८ ॥
ब्रह्मरन्ध्रे भ्रुवोर्मध्ये जिह्वामूले तथा पुनः ।
कण्ठदेशे हृदि तथा नाभौ लिङ्गे च मूलके ॥ ६९ ॥
घ्राणद्वये चक्षुषोश्च कर्णयोर्विन्यसेदिति ।
ब्रह्मरन्ध्रे सर्वमन्त्रे व्यापकत्रयमाचरेत् ॥ ७० ॥
मूर्ध्नि वक्त्रे हृदि नाभौ मूले च पदपञ्चकम् ।
रोहावरोहतो न्यस्य केशवाद्यानथो न्यसेत् ॥ ७१ ॥
वर्णन्यासं पुरः कृत्वा केशवाद्यानथो न्यसेत् ।
वर्णन्यासं पुरः कृत्वा केशवाद्यांस्तु न्यसेत् ॥ ७२ ॥
भूतशुद्धिं लिपिन्यासं विना यस्तु प्रपूजयेत् ।
विपरीतफलं दद्यादभक्तया पूजनं यथा ॥ ७३ ॥
मातृका द्विविधा प्रोक्ता परा चाऽप्यपरा तथा ।
सुषुम्नान्तापरा तु स्यादपरा बाह्यदेशके ॥ ७४ ॥
अथान्तर्मातृकान्यासो मूलाधारे चतुर्दले ।
स्वर्णाभे व-श-ष-स-चतुर्वर्णविभूषिते ॥ ७५ ॥
षड्दले वैद्युतनिभे स्वाधिष्ठानेऽनलत्विषि ।
ब-भ-मै-र्यरलैर्युक्ते विद्युद्भासितमस्तके ॥ ७६ ॥

अनाहते द्वादशारे प्रवालरुचिसन्निभे ।
कादि-ठान्तदलैर्युक्ते योगिनां हृदयङ्गमे ॥ ७७ ॥
विशुद्धषोडशदले धूम्राभे स्वरभूषिते ।
आज्ञाचक्रे च शुभ्राभे ह-क्ष-द्विदलशोभिते ॥ ७८ ॥
सहस्रारे महापद्मे नादबिन्दुद्वयान्विते ।
अ-क-थादित्रिरेखान्म-ह-ल-क्ष-त्रयकोणके ॥ ७९ ॥
तन्मध्ये परबिन्दुं च सृष्टिस्थितिलयात्मकम् ।
एवं समाहितमना ध्यायेन्न्यासोऽयमान्तरः ॥ ८० ॥
मूलादिब्रह्मरन्ध्रान्तं बिन्दुं ध्यायेच्चिदात्मिकम् ।
बिन्दुस्रुतसुधाधारैस्तर्पयन् मातृकां न्यसेत् ॥ ८१ ॥
एकैकं वर्णमुच्चार्य्य मूलाधाराद् भ्रुवोन्तिकम् ।
नमोन्त इति च न्यास आन्तरः परिकीर्तितः ॥ ८२ ॥
बाह्यं वै मातृकान्यासं शृणुष्वावहितो मम ।
ललाटमुखवृत्ताक्षिश्रुतिघ्राणेषु गण्डयोः ॥ ८३ ॥
ओष्ठदन्तोत्तमांगास्यदोः पत्सन्ध्यग्रकेषु च ।
पार्श्वतः पृष्ठतो नाभौ जठरे हृदयेंशके ॥ ८४ ॥
ककुद्यंसे च हृत्पूर्वं पाणिपादयुगे तथा ।
जठराननयोर्न्यसेन्मातृकार्णान् यथाक्रमात् ॥ ८५ ॥
चतुर्द्धा मातृका प्रोक्ता केवला बिन्दुसंयुता ।
सविसर्गा शोभया च रहस्यं तथा कथ्यते ॥ ८६ ॥
विद्याकरी केवला च शोभया भक्तिदायिका ।
सविसर्गा पुत्रप्रदा सबिन्दुमुक्तिदायिनी ॥ ८७ ॥
केशवादि ततो न्यासं कुर्यात् साधकसत्तमः ।
ऋषिः प्रजापतिश्छन्दो गायत्री देवता पुनः ॥ ८८ ॥
अर्द्धलक्ष्मीहरिः प्रोक्तः श्रीबीजेन षडङ्गकम् ।
करशुद्धिविधानं च विधाय ध्यानमाचरेत् ॥ ८९ ॥
उद्यदादित्यसंकाशं तप्तजाम्बूनदप्रभम् ।
कमलावसुधाशोभिपार्श्वद्वन्द्वं परात् परम् ॥ ९० ॥
विचित्ररत्नविहितं नानालंकारशोभितम् ।
पीतवस्त्रपरीधानं शंखकौमोदकीकरम् ॥ ९१ ॥
वामतश्चक्रपद्मे च ध्यात्वैव विन्यसेत्ततः ।
प्रणवं पूर्वमुच्चार्य्य श्रीबीजं तदनन्तरम् ॥ ९२ ॥
मातृकार्णं ततो न्यस्येद्वक्ष्यामि तत्प्रकारकम् ।

केशवं विन्यसेत् कीर्त्या कान्त्या नारायणं न्यसेत् ॥ ९३ ॥
माधवं तुष्टिसहितं गोविन्दं पुष्टिसंयुतम् ।
धृत्या विष्णुं शान्तियुक्तं मधुसूदनमेव च ॥ ९४ ॥
त्रिविक्रमं च क्रियया वामनं दयया न्यसेत् ।
श्रीधरं मेधया हृषीकेशं हृष्ट्यायुतं न्यसेत् ॥ ९५ ॥
श्रद्धयाम्बुजनाभं च लज्जादामोदरौ ततः ।
वासुदेवं ततो न्यस्येल्लक्ष्म्या संकर्षणं ततः ॥ ९६ ॥
सरस्वत्या तथा प्रीत्या प्रद्युम्नं चानिरुद्धकम् ।
रत्या चक्रिजये दुर्गा गदिनौ शार्ङ्गिणा प्रभा ॥ ९७ ॥
खड्गिसत्ये शंखिचंडे घ्राण्या च हलिनं न्यसेत् ।
विलासिन्या मुशलिनं शूलिनं विजयायुतम् ॥ ९८ ॥
पाशिनं विरजायुक्तं विश्वायां कुशिनं न्यसेत् ।
मुकुन्दं च विनदया सुनन्दानन्दजौ न्यसेत् ॥ ९९ ॥
स्मृत्या च नन्दिनं ऋद्धया नरं नरकजित्समृद्धया ।
हरिशुद्धी कृष्णबुद्धी भुक्तिसत्यौ च सात्वतम् ॥ १०० ॥
मत्या च विन्यसेत्प्राज्ञो द्वन्द्वीभूय पृथक् पृथक् ।
शौरिक्षमे शूररमे तथैवोमाजनार्दनौ ॥ १०१ ॥
क्लेदिन्या भूधरं विश्वमूर्त्या क्लिन्ना ततो न्यसेत् ।
वैकुण्ठवसुदे न्यस्येद् वसुधापुरुषोत्तमौ ॥ १०२ ॥
बली च परया युक्तो हंसश्चैव प्रभायुतः ।
वराहोपि निशायुक्तो विमलो मोघया युतः ॥ १०३ ॥
विद्युता नरसिंहेन कथिताः शिवशक्तयः ।
एवमङ्गेषु विन्यस्य ध्यात्वा पूर्वं समाहितः ॥ १०४ ॥
भक्त्या तु पूजयेद्देवं सोऽभीष्टफलमाप्नुयात् ।
केशवादिरयं न्यासो न्यासमात्रेण देहिनाम् ॥ १०५ ॥
अच्युतत्वं ददात्येव सत्यं सत्यं न संशयः ।
केशवाद्या इमे श्यामाः सर्वे नारायणाः स्मृताः ॥ १०६ ॥
शंख-चक्र-गदा-पद्मलसद्भुजचतुष्टयाः ।
नमोऽन्तार्णं समुच्चार्य्य नारायणमनुवदेत् ॥ १०७ ॥
प्राणात्मानं तथोच्चार्य्य केशवाय इति स्मरेत् ।
कीर्त्यैव मनसा युक्त इत्यादि न्यासमाचरेत् ॥ १०८ ॥
मुमुक्षवश्च यतयश्चरेयुर्न्यासमुत्तमम् ।
एवं वा विन्यसेन्न्यासं लक्ष्मीबीजपुरःसरम् ॥ १०९ ॥

स्मृतिं धृतिं महालक्ष्मीं प्राप्यान्ते हरितां व्रजेत् ।
वाग्भवाद्यं न्यसेद्वापि वागीशत्वमवाप्नुयात् ॥ ११० ॥
यद्यदाद्यं न्यसेन्न्यासं तद्बीजैरङ्गकल्पनम् ।
तत्त्वन्यासं ततः कुर्यात् साधकः सिद्धिहेतवः ॥ १११ ॥
कृतेन येन श्रीदेवरूपतामेव यात्यसौ ।
मादिकान्तास्तथार्णाश्च बीजान्येकैकशोच्चरेत् ॥ ११२ ॥
नमः परायेत्युच्चार्य्य ततस्तत्त्वात्मने नमः ।
जीवं प्राणं द्वयं चोक्त्वा सर्वाङ्गेषु प्रविन्यसेत् ॥ ११३ ॥
ततो हृदयमध्ये च तत्त्वत्रयं च विन्यसेत् ।
वं बीजं महीतत्त्वं च . फमहंकारमेव च ॥ ११४ ॥
यं बीजं च मनस्तत्त्वमित्येवं त्रिषु विन्यसेत् ।
लं बीजं शब्दतत्त्वं च न्यसेन्मौलौ ततः परम् ॥ ११५ ॥
वं बीजं स्पर्शतत्त्वं च विन्यसेदानने सुधीः ।
दं बीजं रूपतत्त्वं च हृदये विन्यसेत्ततः ॥ ११६ ॥
पं बीजं रसतत्त्वं च न्यसेदथ च गुह्यके ।
तं बीजं गन्धतत्त्वं च पादयोरथ विन्यसेत् ॥ ११७ ॥
णं बीजं श्रोत्रतत्त्वं च श्रोत्रयोरेव विन्यसेत् ।
ढं बीजं त्वक्तत्त्वं च विन्यसेत् त्वचि साधकः ॥ ११८ ॥
डं बीजं नेत्रतत्त्वं च नेत्रयोरथ विन्यसेत् ।
ठं बीजं रसनातत्त्वं रसनायामथो न्यसेत् ॥ ११९ ॥
टं बीजं घ्राणतत्त्वं च नासिकायां प्रविन्यसेत् ।
ञं बीजं वाक्तत्त्वं च विन्यसेद्वाचि साधकः ॥ १२० ॥
झं बीजं पाणितत्त्वं च पाण्योरेव प्रविन्यसेत् ।
जं बीजं पादतत्त्वं च पादयोरेव विन्यसेत् ॥ १२१ ॥
छं बीजं पायुतत्त्वं च पायौ न्यस्येत् समाहितः ।
चं बीजं लिङ्गतत्त्वं च विन्यसेदथ शिश्नके ॥ १२२ ॥
ङं बीजं तत्त्वमाकाशं पुनर्मौलौ प्रविन्यसेत् ।
घं बीजं वायुतत्त्वं च वदने विन्यसेत् पुनः ॥ १२३ ॥
गं बीजं तेजस्तत्त्वं च हृदये विन्यसेत्सुधी ।
खं बीजं जलतत्त्वं च पुनः शिश्ने प्रविन्यसेत् ॥ १२४ ॥
कं बीजं पृथिवीतत्त्वं विन्यसेत्पादयोः पुनः ।
शं बीजं हृत्पुण्डरीकतत्त्वं हृदि च विन्यसेत् ॥ १२५ ॥
हं बीजं सूर्यमंडलतत्त्वं हृदि च विन्यसेत् ।

स बीजं चन्द्रमण्डलतत्त्वं तत्र प्रविन्यसेत् ॥ १२६ ॥
रं बीजं वह्निमंडलतत्त्वं तत्रैव विन्यसेत् ।
शं परमेष्ठितत्त्वं च वासुदेवं च मूर्द्धनि ॥ १२७ ॥
पं बीजं पुंस्तत्त्वं संकर्षणमथो मुखे ।
पं बीजं विश्वतत्त्वं च प्रद्युम्नं हृदि विन्यसेत् ॥ १२८ ॥
यं बीजं प्रकृतिस्तत्त्वमनिरुद्धमुपस्थके ।
लं बीजं सर्वतत्त्वं च पदोर्नारायणं न्यसेत् ॥ १२९ ॥
क्ष्रौं बीजं कोपतत्त्वं च नृसिंहं सर्वगात्रके ।
एवं तत्त्वानि विन्यस्य प्राणायामं समारभेत् ॥ १३० ॥
दशाक्षरेण च तत्र अष्टाविंशतिरेचके ।
पूरयेद् वामया तद्वद् धारयेत तत्प्रमाणतः ॥ १३१ ॥
प्राणायामो भवेदेको रेचपूरककुम्भकैः ।
अष्टादशार्णेन चेत् तद्वद् द्वादशैवं समाचरेत् ॥ १३२ ॥
एकेन रेचयेत् कामबीजेनैव पृथक् पृथक् ।
पूरयेत् सप्तजप्तेन विंशत्या तेन धारयेत् ॥ १३३ ॥
सर्वेषु कृष्णमन्त्रेषु नानेन वाचरेत् ।
अथवा सर्वमन्त्रेषु वर्णानुक्रमतो जपन् ॥ १३४ ॥
प्राणायामं चरेन्मन्त्री रेचपूरककुम्भकैः ।
मन्त्रप्राणायामः प्रोक्तो यौगिकं कथयामि ते ॥ १३५ ॥
रेचयेद्दक्षया विद्वान् मात्राषोडशकेन च ।
द्वात्रिंशन्मात्रया पूर्य चतुःषष्ट्याऽनुधारयेत् ॥ १३६ ॥
एकश्वासश्चैकमात्रा मात्राया नियमो मतः ।
वामजानुनि तद्धस्तप्रमाणं यावता भवेत् ॥ १३७ ॥
कालेन मात्रा सा ज्ञेया मुनिभिर्वेदपारगैः ।
प्राणायामो द्विधा प्रोक्तः सगर्भश्च विगर्भकः ॥ १३८ ॥
सगर्भो मन्त्रजापेन मात्रायाः संख्यया भवेत् ।
प्राणायामात्परं ज्ञानं प्राणायामात्परं पदम् ॥ १३९ ॥
प्राणायामात्परो योगः प्राणायामात्परं धनम् ।
नास्ति नास्ति पुनर्नास्ति कथितं तव सुव्रत ॥ १४० ॥
वत्सराभ्यासयोगेन ब्रह्मसाक्षाद् भवेद्ध्रुवम् ।
चैतन्यावरणं यद्यत् क्षीयते नात्र संशयः ॥ १४१ ॥
प्राणायामं विना मुक्तिमार्गो नास्ति यमोदितः ।
प्राणायामं विना यद्यत् साधनं विफलं भवेत् ॥ १४२ ॥

प्राणायामेन मुनयः सिद्धिमापुर्नचान्यथा ।
प्राणायामपरो योगी न योगी शिव एव सः ॥ १४३ ॥
गमनागमनं वायोः प्राणस्य धारणं तथा ।
प्राणायाम इति प्रोक्तो योगशास्त्रविशारदैः ॥ १४४ ॥
प्राणो वायुरिति ख्यात आयामस्तन्निरोधनम् ।
प्राणायाम इति प्रोक्तो योगिनां योगसाधनम् ॥ १४५ ॥
आद्यं तयोर्विधीयन्ते नासिकापुटचारिणः ।
रेचयेद्दक्षया नासा पूरयेद्वामतस्ततः ॥ १४६ ॥
द्वात्रिंशदभ्यसन्मन्त्रं प्राणायामः स उच्यते ।
ब्रह्महत्या सुरापानमगम्यागमनं तथा ॥ १४७ ॥
सर्वमाशु दहस्येव प्राणायामेन वै द्विजः ।
भ्रूणहत्यादिपापानि नाशयेन्मासमात्रतः ॥ १४८ ॥
प्रातः सायं चरेन्नित्यं पोडशप्राणसंयमम् ।
नाशयेत् सर्वपापानि तूलराशिमिवानलः ॥ १४९ ॥
सर्वेषामेव पापानां प्रायश्चित्तमिदं स्मृतम् ।
स्वदेहस्थं यथा सर्पाश्चर्मोत्सृज्य निरामयाः ॥ १५० ॥
प्राणायामात्तथा धक्ष्य स विद्यां कामकर्मजाप् ।
अथवा किं बहूक्तेन शृणु गौतम तत्त्वतः ॥ १५१ ॥
प्राणायामान्नहि परो योगिनां मुक्तिसिद्धये ।
प्राणायामं विधायेत्थं देहे पीठानि विन्यसेत् ॥ १५२ ॥
आधारशक्तिं प्रकृतिं कूर्मसूकरमेव च ।
पृथिवीं क्षीरसिन्धुं च श्वेतद्वीपं च मध्यतः ॥ १५३ ॥
तन्मध्ये रत्नगेहं च सर्वाभीष्टफलप्रदम् ।
गेहमध्ये कल्पवृक्षं सर्वरत्नमहोज्ज्वलम् ॥ १५४ ॥
दक्षिणांसे दक्षिणोरौ तथा वामद्वये पुनः ।
धर्मज्ञानं च वैराग्यं विन्यसेदैश्वरं तथा ॥ १५५ ॥
मुखे पार्श्वे नाभिपार्श्वे नमःपूर्वस्तु विन्यसेत् ।
विन्यस्यैवं पुनर्हृदि पद्मं विश्वमयं न्यसेत् ॥ १५६ ॥
प्रकृत्यष्टलसत्पत्रविकारमयकेसरम् ।
तन्मध्ये विन्यसेन्मंत्री पञ्चाशद्वर्णकर्णिकाम् ॥ १५७ ॥
प्रणवस्य त्रिभिर्वर्णैर्विन्यसेन्मण्डलत्रयम् ।
कलाभिः सहितं तद्वद् दशद्वादशपोडशैः ॥ १५८ ॥
अकारोकारमकाराः प्रणवांशोद्भवाक्षराः ।

ब्रह्मविष्णुमहेशाख्याः समष्टिव्यष्टिरूपकाः ॥ १५९ ॥
समष्ट्या केवलं ब्रह्म सच्चिदानन्दलक्षणम् ।
स्वबीजपूर्वकस्तत्र सत्त्वादीन्यथ विन्यसेत् ॥ १६० ॥
तदंशेनैव मतिमान् न्यसेदात्मचतुष्टयम् ।
आत्मान्तरात्मपरमात्मज्ञानात्मानश्च ते मताः ॥ १६१ ॥
आत्मासौ जागरे स्थूलो विश्वात्मा विश्वरूपकः ।
नामाद्यबीजसहितं हृन्मध्ये च व्यवस्थितम् ॥ १६२ ॥
अत एव हृदि न्यस्येद् वाग्वृत्तिर्हृदये स्थितः ।
अन्तरङ्गतया चायमन्तरात्मा हृदन्तरे ॥ १६३ ॥
मनोमयस्तेजसाख्येऽन्तरिन्द्रियवृत्तिधृक् ।
अत एव मुनेचायमन्तरात्मेति गीयते ॥ १६४ ॥
अं बीजं चास्य गदितं तत्पूर्वं विन्यसेत् सुधीः ।
परमात्मासुषुम्नाख्यो मनोव्यावृत्तिहारकः ॥ १६५ ॥
विलये चेन्द्रिये तत्र सुसुख्यः केवलः स्थितः ।
पं बीजात् परमात्मानं यजेत् सर्वार्थसिद्धये ॥ १६६ ॥
संकर्षणश्चानिरुद्धः प्रद्युम्नश्चेति तत् त्रयम् ।
ज्ञानात्मासौ वासुदेवः स्वयम्भूः प्राज्ञरूपकः ॥ १६७ ॥
वृत्तित्रये विलीने तु केवलं सुखचिन्मयः ।
सुखात्मा वासुदेवोसौ चित्कलाप्रकृतिः परा ॥ १६८ ॥
बीजं तस्य प्रवक्ष्यामि केवलं सुखचिन्मयम् ।
व्योमाक्षरं वह्निबीजं तुर्यस्वरसमन्वितम् ॥ १६९ ॥
नादबिन्दुं कलायुक्तं बीजं तत्सुखचिन्मयम् ।
वेदत्रयोद्धृतं सारं सर्वकारणकारणम् ॥ १७० ॥
केसरेष्वष्टशक्तीश्चाप्यष्टप्रकृतिरूपिणी ।
मध्यशक्तिः पराख्या च चिदानन्दस्वरूपिणी ॥ १७१ ॥
विमलोत्कर्षणीज्ञाना क्रियायोगा च शक्तयः ।
प्रह्वा सत्या तथेशानानुग्रहा नवमी स्मृता ॥ १७२ ॥
नवशक्ती प्रविन्यस्य न्यसेत्तत्र महामनुः ।
ॐ नमो भगवते विष्णवे प्रोच्यसर्वभूतात्मने पदम् ॥
वासुदेवपदं ङेन्तं सर्वात्मसंयोगयोगपद्मपीठात्मने नमः॥१७३॥
अयं पीठमनुः प्रोक्तः सर्वभूतात्मकात्परः ।
श्यामलं कोमलं धाम तत्रोपरि च चिन्तयेत् ॥ १७४ ॥

॥ इति श्रीगौतमीयतन्त्रे द्वितीयोऽध्यायः ॥ २ ॥

---

## अथ तृतीयोऽध्यायः

अथाखिलं न्यासजालं शृणुष्वावहितोऽनघ।
नित्यन्यासाः पुरा प्रोक्ता यैर्विना विफला यतः ॥ १ ॥
मंत्रयंत्रार्चनाः सर्वाः प्रकारेणाप्यनुष्ठिताः।
फलाधिक्येच्छया न्यासान् समस्तपुरुषार्थदान् ॥ २ ॥
शृणु वक्ष्यामि विप्रेन्द्र येन विष्णुमयो भवेत्।
स्वरपङ्क्तं यथापूर्वं पाश्चात्त्यं स्वरपङ्द्वयम् ॥ ३ ॥
मूर्त्तिद्वादशकं तद्वद् वासुदेवेन संयुतम्।
कपाले विन्यसेद्धात्रा केशवं सुसमाहितः ॥ ४ ॥
नारायणं च जठरे अर्यम्णा संयुतं तथा।
हृदि माधवनामानं मित्रेणेह समन्वितम् ॥ ५ ॥
गोविन्दं गलकूपे च वरुणेन प्रविन्यसेत्।
विष्णुं च दक्षिणे पार्श्वे चांशुना सह विन्यसेत् ॥ ६ ॥
भुजान्ते दक्षिणे न्यसेद् भगेन मधुसूदनम्।
त्रिविक्रमं दक्षगले न्यस्येद्विवस्वता युतम् ॥ ७ ॥
दामोदरमुपेन्द्रेण वामपार्श्वे न्यसेत् सुधीः।
भुजान्ते वासुदेवम् च पूष्णा सह प्रविन्यसेत् ॥ ८ ॥
वामगले संकर्षणं पर्जन्येन च विन्यसेत्।
पद्मनाभं पृष्ठवंशे त्वष्ट्रा सह प्रविन्यसेत् ॥ ९ ॥
ककुद्देशेऽनिरुद्धं तं विष्णुना सह विन्यसेत्।
द्वादशाक्षरमनुचरं विन्यसेद् ब्रह्मरन्ध्रके ॥ १० ॥
वासुदेवो भवेत्साक्षाद् व्यापितस्तस्य तेजसा।
त्रिमात्रिकं समुद्धृत्य नमो भगवते लिखेत् ॥ ११ ॥
वासुदेवं चतुर्थ्यां च मन्त्रोऽयं सुरपादपः।
अस्य विज्ञानमात्रेण वासुदेवः प्रजायते ॥ १२ ॥
मनुसंपुटितान्यन्तेमातृकां विश्वमातरम्।
तेनैव मन्त्रसिद्धिः स्याद्दोषसंघातनाशनात् ॥ १३ ॥
दशार्णं गोलकं न्यासं वक्ष्ये संभूतिदायकम्।
मन्त्रदशावृत्तिमयं गोपनीयं प्रयत्नतः ॥ १४ ॥
आधारे ध्वजनाभौ च हृदि गलमुखांशके।
ऊरुद्वये कन्धरायां नाभ्यां कुक्षिहृत्स्तनद्वये ॥ १५ ॥

पार्श्वद्वये तथा श्रोण्योर्मस्तकास्ये च नेत्रयोः ।
कर्णनासिकयोस्तद्वत् कपोलकरसन्धिषु ॥ १६ ॥
तदग्रे पादयोः सन्धौ तदग्रेष्वपि चादरात् ।
मस्तके तत्प्राच्यादिशासु व्यापकं न्यसेत् ॥ १७ ॥
दोर्ष्णोस्तथोरुद्वये मन्त्री मन्त्रवर्णांस्ततो न्यसेत् ।
शिरोदयास्यकण्ठहृत्सु तुंदकं दांधुपुक्रमात् ॥ १८ ॥
मन्त्रवर्णान् न्यसेज्जानुप्रपत्सु मनुवित्तमः ।
कर्णगण्डांसवक्षोजेष्वपि मन्त्रस्तत्त्ववित् ॥ १९ ॥
कुक्षिस्फिग्जङ्घां तज्जानुपादेषु च विन्यसेत् ।
विभूतिपञ्जरन्यासः सर्वभूतप्रवर्त्तकः ॥ २० ॥
दशतत्त्वं ततो न्यस्येत्तद्दशार्णसिद्धये ।
पृथिव्यप्तेजोमरुद्भिर्व्यन्ति च तत्त्वकम् ॥ २१ ॥
अहङ्कारो महत्तत्त्वं प्रकृतिः पुरुषः परः ।
इमानि पञ्च तत्त्वानि यथावदवधारय ॥ २२ ॥
पदां हृदये वक्त्रे मूर्ध्निपञ्च न्यसेत्ततः ।
हृदि द्वयं तथा व्याप्य सर्वांगे विन्यसेत्सुधीः ॥ २३ ॥
मस्तकादि ततो न्यस्येद्यावत्पादावसानकम् ।
अयं न्यासो गुप्ततमो मन्त्राणां शीघ्रसिद्धिदः ॥ २४ ॥
कार्योऽन्येष्वपि गोपालमन्त्रेष्वपि विशारदैः ।
दशाक्षरस्य वर्णाश्च संहारक्रमतो न्यसेत् ॥ २५ ॥
सृष्टिन्यासे मनोरस्य वर्णान् परितो न्यसेत् ।
एकैकाक्षरमुच्चार्य नमोऽन्ते तु पुनः पठेत् ॥ २६ ॥
परा येति च तत्त्वानि तदन्ते तमसा सह ।
मनसा वा न्यसेन् न्यासान् पुष्पेणैव तथा मुने ॥ २७ ॥
अङ्गुष्ठानामिकाभ्यां च अन्यथा विफलं भवेत् ॥ २८ ॥
इति गौतमीयतन्त्रे कामन्यासाध्यायस्तृतीयः ॥ ३ ॥

---

## अथ चतुर्थोऽध्यायः

अथ वृन्दावनं ध्यायेत् सर्वदेवनमस्कृतम् ।
सर्वर्तुकुसुमोपेतं पतत्रिगणनादितम् ॥ १ ॥
भ्रमद्भ्रमरझङ्कारमुखरीकृतदिङ्मुखम् ।
कालिन्दीजलकल्लोलशीतलानिलसेवितम् ॥ २ ॥
नानापुष्पलताबद्धवृक्षखण्डैश्च मण्डितम् ।
समानोदितचन्द्रार्कतेजोदीपेन दीपितम् ॥ ३ ॥
कमलोत्पन्नकल्हारधूलिधूसरितांबरम् ।
शाखामृगगणाकीर्णं नानामृगनिषेवितम् ॥ ४ ॥
द्वात्रिंशद्वनसंवीतं वैकुण्ठादतिसौख्यदम् ।
पुरन्दरमुखैर्देवैः सर्वतः समधिष्ठितम् ॥ ५ ॥
तन्मध्ये रत्नभूमिं च सूर्यायुतसमप्रभाम् ।
तत्र कल्पतरूद्यानं नियतं रत्नवर्षणम् ॥ ६ ॥
माणिक्यशिखरोल्लासितन्मध्ये मणिमंडपम् ।
नानारत्नगणैश्चित्रं सर्वतेजोविराजितम् ॥ ७ ॥
फलभागुल्लसच्चित्रवितानैरुपशोभितम् ।
रत्नतोरणगोपूरमाणिक्यवेदिकान्वितम् ॥ ८ ॥
दिव्यैस्समुकुरैः सत्सु मुक्ताफलविराजितम् ।
कोटिसूर्यसमाभासं निर्मुक्तं षड् तरङ्गकैः ॥ ९ ॥
बुभुक्षा वा पिपासा च प्राणस्य मनसस्तथा ।
शोकमोहौ शरीरस्य जरामृत्युषड्डुर्मयः ॥ १० ॥
चतुर्द्वारसमायुक्तं कपाटाष्टकशोभितम् ।
तत्र कल्पतरुं ध्यायेत् सुविष्टं रत्नवर्षणम् ॥ ११ ॥
सेवितं ऋतुभिः सर्वैः सुधाशीकरवर्षिणम् ।
गारुन्मतलसत्पत्रं प्रवालरत्नपल्लवम् ॥ १२ ॥
मुक्तारत्नप्रवसितं पद्मरागफलोज्ज्वलम् ।
संसारतापविच्छेदिकुशलच्छायमद्भुतम् ॥ १३ ॥
तन्मूले चिन्तयेन्मन्त्री रत्नसिंहासनं शुभम् ।
तत्र सूर्यसमाभासं पंकजञ्चाष्टपत्रकम् ॥ १४ ॥

सर्वतत्त्वमयं तत्र चिन्तयेज्जगदीश्वरम् ।
संसारसागरोत्तीर्त्यै धर्मकामार्थसिद्धये ॥ १५ ॥
पीताम्बरधरं कृष्णं पुण्डरीकनिभेक्षणम् ।
रक्तनेत्राधरं रक्तपाणिपादतलं शुभम् ॥ १६ ॥
कौस्तुभोद्भासितोरस्कं नानारत्नविभूषितम् ।
उद्दाम-विलसन्मुक्ता-रत्न-हारोपशोभितम् ॥ १७ ॥
रत्नैर्नानाविधैर्युक्तं कटिसूत्राङ्गुलीयकम् ।
गोरोचनकुंकुमेन ललाटतिलकान्वितम् ॥ १८ ॥
नानारत्नप्रभोद्भासिमुकुटं दीप्ततेजसम् ।
हारकेयूरकटककुण्डलैश्च सुशोभितम् ॥ १९ ॥
अलकाशोभिसद्वक्त्रं पीताम्बरयुगावृतम् ।
बिम्बाधरपुटोद्भासिवंश्याऽमृतरसान्वितम् ॥ २० ॥
बर्हिपत्रकृतापीडं वन्यपुष्पैरलंकृतम् ।
कदम्बकुसुमोन्नद्धचारुमालाविराजितम् ॥ २१ ॥
कोटिकंदर्पलावण्यविलसद्बन्धुरोदरम् ।
वेणुं गृहीत्वा हस्ताभ्यां मुखे संयोज्य वादिनम् ॥ २२ ॥
गायन्तं दिव्यतानैश्च वृन्दावनगतं हरिम् ।
स्वर्गादिव परिभ्रष्टं कन्यकाशतमण्डितम् ॥ २३ ॥
गोगोवत्सगणाकीर्णवृपपण्डैश्च मण्डितम् ।
गोपकन्यासहस्रैस्तु पद्मपत्रायतेक्षणैः ॥ २४ ॥
अर्चितं देवकुसुमैस्त्रैलोक्यैकगुरुं परम् ।
तुम्बुरुर्नारदश्चैव हाहा हूहूस्तथैव च ॥ २५ ॥
किंनरीमिथुनं चापि श्रुत्वा गीतं तथा हरेः ।
वीणादिसाधनं त्यक्त्वा विस्मयाविष्टचेतसः ॥ २६ ॥
ते स्तुवन्ति महात्मानं गायन्तो वियति स्थिताः ।
सिद्धगन्धर्वयक्षैश्च अप्सरोभिर्विहंगमैः ॥ २७ ॥
स्थावरैः पन्नगैश्चापि सिद्धैर्विद्याधरैस्तथा ।
शाखामृगैर्मनुष्यैश्च वीक्ष्यमाणैः सुविस्मितैः ॥ २८ ॥
सर्वलक्षणसम्पन्नं सौन्दर्य्येणाभिशोभितम् ।
मोहनं सर्वगोपीनां लोकानां पतिमव्ययम् ॥ २९ ॥
नारदेन च सिद्धेन विश्वामित्रेण धीमता ।
पराशरेण व्यासेन भृगुणांगिरसेन च ॥ ३० ॥
दक्षेण सनकाद्यैश्च सिद्धेन कपिलेन च ।

वास्तु-वागीश-हारीत-याज्ञवल्क्योशनः-क्रतु- ॥ ३१ ॥
मार्कण्डेय-भरद्वाज-पुलस्त्य-पुलहादिभिः ।
वसिष्ठाद्यैर्मुनीन्द्रैश्च स्तूयमानं सुरासुरैः ॥ ३२ ॥
ब्रह्मलोकगतैः सिद्धैर्नानालोकगतैरपि ।
अन्यैरपि सुरश्रेष्ठैः स्तूयमानं स्मरेद् विभुम् ॥ ३३ ॥
एवं संचिन्तयेन्मन्त्री चेतसा कृष्णमव्ययम् ।
संसारसागरं घोरमपि वत्सपदायते ॥ ३४ ॥

इति गौतमीये महातन्त्रे चतुर्थोऽध्यायः ॥ ४ ॥

# अथ पञ्चमोऽध्यायः

गौतम उवाच—

यद्यदुक्तं त्वया ब्रह्मन् तत्तत्सर्वं श्रुतं मया।
इदानीं परिपृच्छामि केनात्र चाधिकारिता॥ १॥

नारद उवाच—

दीक्षितोऽत्राधिकारित्वमाप्नोति गुरुसेवकः।
द्विजानामनुपेतानां स्वधर्माध्ययनादिषु॥ २॥
यथाधिकारो नास्तीह संध्योपासनकर्म्मसु।
तथा ह्यदीक्षितानां तु मन्त्रतन्त्रार्चनादिषु॥ ३॥
नाधिकारोस्त्यतः कुर्यादात्मानं शिवसंस्कृतम्।
अत एव हि दीक्षार्थं सर्वज्ञं गुरुमाश्रयेत्॥ ४॥
सुन्दरः सुमुखः स्वच्छः सुलभो बहुतन्त्रवित्।
असंशयः संशयच्छिन्निरपेक्षो गुरुर्मतः॥ ५॥
वेदवेदान्त-सिद्धान्त-ज्ञानविज्ञान-पारगः।
वाङ्मनःकायचित्तैश्च विष्णोः शुश्रूषणे रतः॥ ६॥
विष्णुमन्त्रानुसन्धार्य - विष्णुविज्ञानवेदकः।
विष्णौ समर्पकः सम्यक् त्रिविधोत्पातकर्मणः॥ ७॥
मनःसन्सुदान्तश्च मन्त्रार्थज्ञानपारगः।
पिण्डे पदे तथा रूपे रूपातीते विवेचकः॥ ८॥
सन्ध्यात्रयविशेषज्ञोऽप्यध्वषट्कविशोधकः।
मन्त्रचैतन्यविज्ञाता गुरुरुक्तः स्वयम्भुवा॥ ९॥
नमोस्तु गुरवे तस्मै प्रत्यक्षाय यदाज्ञया।
मृद्भस्मदारुदृपदः फलंत्यविकलं फलम्॥ १०॥
पंचाम्नायविशेषज्ञो निग्रहानुग्रहक्षमः।
शिष्यस्य संशयच्छेत्ता गुरुर्भवति नापरः॥ ११॥
वैष्णवन्यायसिद्धान्तचिन्तामणिरिवापरः।
आश्रमी ज्ञानकुशलो गुरुर्भवति नापरः॥ १२॥
मन्त्रतन्त्रार्थचैतन्य-कुण्डली - गूढवेदकः।
मन्त्रसिद्धान्तविधिविद् गुरुर्भवति नापरः॥ १३॥
सुदूरमपि गन्तव्यं यत्राम्नायविदो जनाः।
तेपि स्तुत्या नमस्याश्च सेव्याश्चाभीष्टमिच्छता॥ १४॥

एवंविधो गुरुर्ज्ञेयस्त्वन्यथा शिष्यदुःखदः ।
शिष्यः कुलीनः शुद्धात्मा पुरुषार्थपरायणः ॥ १५ ॥
अधीतवेदः कुशलः पितृमातृहितेरतः ।
धर्मविद्धर्मकर्त्ता च गुरुशुश्रूषणे रतः ॥ १६ ॥
सदा शान्तात्मतत्त्वज्ञो दृढग्रहो दृढाश्रयः ।
हितैषी प्राणिनां नित्यं परलोकार्थकर्मकृत् ॥ १७ ॥
वाङ्मनःकायवपुभिर्गुरुशुश्रूषणे रतः ।
अनित्यकर्मणस्त्यागी नित्यानुष्ठानकर्मकृत् ॥ १८ ॥
जितेन्द्रियो जितालस्यो जितमोहविमत्सरः ।
गुरुवद् गुरुपुत्रेषु तत्कलत्रेषु भक्तिमान् ॥ १९ ॥
एवंविधो भवेच्छिष्यस्त्वितरो गुरुदुःखदः ।
वर्षैकेण भवेद्योग्यो विप्रः सर्वगुणान्वितः ॥ २० ॥
वर्षद्वयेन राजन्यो वैश्यस्तु वत्सरैस्त्रिभिः ।
चतुर्भिर्वत्सरैः शूद्रः कथिता शिष्ययोग्यता ॥ २१ ॥
यदा शिष्यो भवेद्योग्यः कृपया सद्गुरुस्तदा ।
कृपया परया सम्यग्दीक्षाया विधिमाचरेत् ॥ २२ ॥
मंत्रारम्भस्तु चैत्रे स्यात्समस्तपुरुषार्थदः ।
वैशाखे रत्नलाभः स्याज्ज्येष्ठे तु मरणं ध्रुवम् ॥ २३ ॥
आषाढे बन्धुनाशः स्यात्पूर्णायुः श्रावणे भवेत् ।
प्रजानाशो भवेद् भाद्रे आश्विने रत्नसंचयः ॥ २४ ॥
कार्तिके मंत्रसिद्धिः स्यान्मार्गशीर्षे तथा भवेत् ।
पौषे तु शत्रुपीडा स्यान्माघे मेधाविवर्द्धनम् ॥ २५ ॥
फाल्गुने सर्वकामाः स्युर्मलमासं विवर्जयेत् ।
पञ्चाङ्गशुद्धदिवसे स्योदये चन्द्रसूर्ययोः ॥ २६ ॥
गुरुशुक्रोदये चैव शस्यते मंत्रसंस्क्रिया ।
रवौ गुरौ सिते सोमे कर्त्तव्यं बुधशुक्रयोः ॥ २७ ॥
शुक्लपक्षे शुभा दीक्षा कृष्णे स्यात्पञ्चमावधि ।
द्वादश्यां सर्वथा कार्या चामलायां शुभेऽहनि ॥ २८ ॥
कृष्णप्रिया द्वादशी स्यात्कृष्णदीक्षाप्रवर्त्तिनी ।
उत्तरात्रयरोहिण्यां रेवती - पुष्यवासरे ॥ २९ ॥
धनिष्ठा वायुमित्राश्विपित्र्यं स्याद्रं च नैऋतम् ।
शैशवैष्णवहस्ताश्च दीक्षायां तु शुभावहाः ॥ ३० ॥
अश्विनी-रोहिणीस्वाती-विशाखाहस्तभेषु च ।

कृष्णोत्तरात्रये त्वेवं कुर्यान्मंत्राभिषेचनम् ॥ ३१ ॥
शुभयोगेषु सर्वेषु दीक्षा सर्वशुभप्रदा ।
शुभानि करणान्याहुर्दीक्षायां तु विशेषतः ॥ ३२ ॥
शकुन्यादीनि विष्टिं च विशेषेण विवर्जयेत् ।
चराः सर्वे विवर्ज्याः स्यात् स्थिरराशिषु सौख्यदा ॥ ३३ ॥
त्रिषडायगताः पापाः शुभाः केन्द्रत्रिकोणगाः ।
दीक्षायां तु शुभाः सर्वे रंध्रस्थाः सर्वनाशकाः ॥ ३४ ॥
शिष्यस्य जन्मसंक्रान्तौ विषुवे अयने द्वये ।
अन्येषु पुण्ययोगेषु ग्रहणे चन्द्रसूर्ययोः ॥ ३५ ॥
शिष्यानुकूलकाले वा दीक्षा सर्वशुभावहा ।
सूर्यग्रहणकाले तु नान्यदन्वेषितं भवेत् ॥ ३६ ॥
तत्र यद्यत्कृतं सर्वमनंतफलदं भवेत् ।
विनायासेन मंत्रस्य सिद्धिर्भवति नान्यथा ॥ ३७ ॥
भूमेः परिग्रहं कुर्याद्यावदायतनं भवेत् ।
शुक्लमृत्स्ना च या भूमिर्ब्राह्मी सा परिकीर्तिता ॥ ३८ ॥
क्षत्रिया रक्तमृत्स्ना स्याद् हरिद्वैश्या प्रकीर्तिता ।
कृष्णा भूमिर्भवेच्छूद्रा चतुर्धा परिकीर्तिता ॥ ३९ ॥
ब्राह्मी सर्वार्थसिद्धिः स्यात्क्षत्रिया राज्यदा मता ।
धनधान्यकरी वैश्या शूद्रा तु निन्दिता मुने ॥ ४० ॥
ततो भूमिं परीक्षेत वास्तुज्ञानविशारदः ।
तल्पादिशोधनं कुर्यात्तुपांगारादि शोधयेत् ॥ ४१ ॥
एतस्याकरणे मंत्री न किञ्चित्फलमाप्नुयात् ।
विप्राशिषा वेदघोषैर्मंगलाचारपूर्वकम् ॥ ४२ ॥
वास्तोर्हिमंडलं कुर्याद्यथाशुभं यथाविधि ।
पूर्वापरायतं सूत्रं विन्यसेद्धस्तमानतः ॥ ४३ ॥
तन्मध्ये किञ्चिदानम्य मत्स्यौ द्वौ परितो लिखेत् ।
तयोर्मध्यस्थितं सूत्रं विन्यसेद्दक्षिणोत्तरम् ॥ ४४ ॥
द्वाभ्यां द्वाभ्यां तथा द्वाभ्यां कोणेषु मकरांल्लिखेत् ।
मत्स्यमध्यस्थिताग्राणि तत्र सूत्राणि पातयेत् ॥ ४५ ॥
चतुरस्रं भवेत्तत्र चतुःकोष्ठसमन्वितम् ।
ईशानाद्राक्षसं यावद्यावदग्नेः प्रभंजनम् ॥ ४६ ॥
एवं सूत्रद्वयं दद्यात्कर्णसूत्रसमाहितः ।
ब्रह्माणं पूजयेदादौ मध्यकोष्ठचतुष्टये ॥ ४७ ॥

दिक्चतुःष्वेपु पूर्वादौ यजेदार्पमनंतरम् ।
विवस्वन्तं ततो मित्रं महीधरमनन्तरम् ॥ ४८ ॥
कोणार्द्धकोष्ठद्वन्द्वेपु वह्न्यादिपरितः पुनः ।
सावित्रं सवितारं च शक्रमिन्द्रजयं पुनः ॥ ४९ ॥
रुद्रं रुद्रजयं विद्वानापं चाप्यायुवत्सकम् ।
तत्कर्णसूत्रोभयतः कोष्ठद्वन्द्वेपु देशिकः ॥ ५० ॥
शर्वं गुहं चार्यमणं जंभकं पिलिपिच्छिकम् ।
वरकीं च विदारीं च पूतनामर्चयेत्क्रमात् ॥ ५१ ॥
अर्चयेद्दिक्षु पूर्वादौ सार्द्धाष्टपदेष्विमान् ।
अष्टावष्टविभागेन देवतादेशिको मतः ॥ ५२ ॥
क्रमादीशानपर्जन्यौ जयंतः शतभास्करौ ।
सत्यो वृपांतरिक्षौ च दिशि प्राच्यां व्यवस्थिताः ॥ ५३ ॥
अग्निः पूषा च वितथो यमश्च गृहरक्षकः ।
गंधर्वो भृंगराजश्च मृगो दक्षिणदिग्गजाः ॥ ५४ ॥
निऋतिर्वा वारिकश्च सुग्रीववरुणौ ततः ।
पुष्पदन्तासुरौ शेपरोगौ प्रत्यग्दिशि स्थिताः ॥ ५५ ॥
वायुर्नागश्च कुक्कलः सोमो भल्लाट एव च ।
अर्गलाख्यो दित्यदिती कुवेरस्यः दिशि स्थिताः ॥ ५६ ॥
उक्तानामिति देवानां पदान्यापूर्वपञ्चभिः ।
रजोभिस्तेष्वथो तेभ्यः पायसान्नैर्बलिं हरेत् ॥ ५७ ॥
पायसैर्मधुरैः सर्वाः संयजेन्मधुरान्वितैः ।
तत्तद्द्रव्यैर्वा मतिमान्पूजयेद् दृष्टिशान्तये ॥ ५८ ॥
पायसौदनलाजैश्च युक्तं धूपप्रसूनकैः ।
अन्नादिभी रसैर्युक्तं भावभक्तादिमण्डितम् ॥ ५९ ॥
गृहाणेमां बलिं ब्रह्मन् वास्तुदोपं प्रणाशय ।
गन्धादिशर्करापूपपायसोपरि संयुतम् ॥ ६० ॥
आर्यकाख्य गृहाणेमं सर्वदोपं प्रणाशय ।
चन्दनाभ्यर्चितं नाथ कर्पूरागुरुमण्डितम् ॥ ६१ ॥
विवस्वन् वै गृहाणेमं सर्वदोपं प्रणाशय ।
सगुडं पायसं नाथ पुष्पदीपसमन्वितम् ॥ ६२ ॥
गृहाणेमं बलिं हृद्यं मित्रशान्तिं प्रयच्छ मे ।
मापौदनं समांसं च गन्धादिक्षीरसंयुतम् ॥ ६३ ॥
गृहाणेमं महाभक्ष्यं सर्वदोपं प्रणाशय ।

एवं मध्ये तु संपूज्य ईशानादिर्बलिं हरेत् ॥ ६४ ॥
क्षीरं खण्डसमायुक्तं पुष्पादिभिरलंकृतम् ।
गृहाणेमं बलिं हृद्यं वास्तुशान्तिं प्रयच्छ मे ॥ ६५ ॥
दधीदं गुडसंमिश्रं गन्धादिभिः सुसंयुतम् ।
गृहाणेमं बलिं वत्स विघ्नमत्र प्रणाशय ॥ ६६ ॥
पुष्पादिकुशपानीयं शर्करागुरुवासितम् ।
सावित्रं वै गृहाणेमं शान्तिमत्र प्रयच्छ मे ॥ ६७ ॥
पिष्टकं सगुडं नाथ रक्तगन्धादिशोभितम् ।
गृहाणेमं बलिं सूर्य विघ्नमत्र प्रणाशय ॥ ६८ ॥
शीतमन्नं तथायुष्यं कुसुमादिसमन्वितम् ।
गृहाणेमं बलिं हृद्यमिन्द्रजय नमोस्तु ते ॥ ६९ ॥
पक्वापक्वमिदं मांसं वस्त्रपुष्पादिसंयुतम् ।
गृहाणेमं बलिं हृद्यं रुद्रदेव नमोस्तु ते ॥ ७० ॥
समांसं घृतसंपक्वं गन्धपुष्पादिसंयुतम् ।
गृहाणेमं रुद्रजय वास्तुस्वस्ति प्रयच्छ मे ॥ ७१ ॥
रक्तपुष्पं समांसं वै रक्तवस्त्रादिसंयुतम् ।
विदारिन् वै गृहाणेमं रक्षोविघ्नं विनाशय ॥ ७२ ॥
पीतरक्तादिसंयुक्तं रक्तगन्धादिसंयुतम् ।
गृहाणेमं पूतने त्वं रक्षोविघ्नं विनाशय ॥ ७३ ॥
सघृतं मांसभक्तं च वस्त्रगन्धाद्यलंकृतम् ।
बलिं गृहाण शर्वेमं रक्षोविघ्नं प्रणाशय ॥ ७४ ॥
मांसं पुष्पादिसंयुक्तं मांसभक्तोपरिस्थितम् ।
गृहाणेमं बलिं स्कन्द रक्षोविघ्नं विनाशय ॥ ७५ ॥
समांसपिष्टकैर्युक्तं पक्वमांसोदकान्वितम् ।
अर्यमन् वै गृहाणेमं रक्षोविघ्नं विनाशय ॥ ७६ ॥
रक्तमांसौदनं मत्स्यं गन्धधूपसमन्वितम् ।
जम्भक त्वं गृहाणेमं रक्षोविघ्नं प्रणाशय ॥ ७७ ॥
सघृतं चाक्षतामत्रं वस्त्रगन्धाद्यलंकृतम् ।
गृहाणेमं बलिं त्वीश वास्तुदोषापहारकम् ॥ ७८ ॥
उत्पलं पायसैर्युक्तं वस्त्रादिकसमन्वितम् ।
गृहाणेमं बलिं हृद्यं वास्तुदोषं प्रणाशय ॥ ७९ ॥
पञ्चहस्तं सुपीतं च ध्वजं भक्तादिमण्डितम् ।
गृहाणेमं बलिं हृद्यं विष्णुप्रभ नमोस्तु ते ॥ ८० ॥

रक्तपुष्पयुतं भक्तं रक्तगन्धादिभिर्युतम् ।
गृहाणेमं बलिं ह्यं भास्कराय नमोस्तु ते ॥ ८१ ॥
वितानं धूम्रवर्णाभं गन्धादिकसुशोभितम् ।
रक्तयुक्तं गृहाणेमं बलिं सत्य नमोस्तु ते ॥ ८२ ॥
इदं तु मांसभक्तं वै वस्त्रगन्धादिपूजितम् ।
गृहाणेमं बलिं ह्यं वास्तुदोषं प्रणाशय ॥ ८३ ॥
इदं नु शाड्वलं मांसं नैवेद्यादिकसंयुतम् ।
गृहाणेमं बलिं ह्यं व्योमशान्ति प्रयच्छ मे ॥ ८४ ॥
सुवर्णं पिष्टकं चापि वस्त्रगन्धादिभिर्युतम् ।
घृतान्वितं गृहाणेमं सप्तजिह्व नमोस्तु ते ॥ ८५ ॥
क्षीरलाजामांसयुक्तं रक्तपुष्पादिसंयुतम् ।
गृहाणेमं बलिं ह्यं पूपदेव नमोस्तु ते ॥ ८६ ॥
दधिगन्धादिभिर्युक्तं पीतपुष्पसमन्वितम् ।
बलिं प्रगृह्यतां सोम सर्वदोषं प्रणाशय ॥ ८७ ॥
ओदनं घृतसम्मिश्रं गन्धपुष्पसमन्वितम् ।
गृहाणेमं बलिं ह्य भल्लाटक नमोस्तु ते ॥ ८८ ॥
मांसान्नं तु घृताभ्यक्तं गन्धपुष्पादिसंयुतम् ।
गृहाणेमं बलिं ह्य भल्लाटक नमोस्तु ते ॥ ८९ ॥
मांसान्नं तु घृताभ्यक्तं गन्धपुष्पादिसंयुतम् ।
गृहाणेमं बलिं ह्यमर्गलाख्य नमोस्तु ते ॥ ९० ॥
पूतिकामधुसम्मिश्रं वस्त्रगन्धादिसंयुतम् ।
गृहाणेमं बलिं ह्यं देवमातर्नमोस्तु ते ॥ ९१ ॥
क्षीरखण्डसमायुक्तं नानापुष्पोपशोभितम् ।
दैत्यमातर्गृहाणेमं सर्वदोषं प्रणाशय ॥ ९२ ॥
स्वर्गपातालमध्ये च ये देवा वास्तुदेवताः ।
गृह्णन्त्विमं बलिं ह्यं तुष्टा यांतु स्वमन्दिरम् ॥ ९३ ॥
मातरो भूतवेताला ये चान्ये बलिकांक्षिणः ।
विष्णोः पारिषदा ये च तेपि गृह्णन्त्विमं बलिम् ॥ ९४ ॥
पितृभ्यः क्षेत्रपालेभ्यो बलिं दत्त्वा प्रकामतः ।
अभावादुक्तद्रव्यस्य कुशपुष्पादिभिर्यजेत् ॥ ९५ ॥

इति गौतमीये महातन्त्रे पञ्चमोऽध्यायः ॥ ५ ॥

# अथ षष्ठोऽध्यायः

भूमिशुद्धिं विधायेत्थं रचयेद्यागमण्डपम् ।
षोडशस्तम्भसंयुक्तं चत्वारस्तेषु मध्यगाः ॥ १ ॥
अष्टहस्तसमुच्छ्राया निश्छिद्रा ध्वजिनः समाः ।
पञ्चहस्तसमुच्छ्रायाः संस्थाप्या द्वादशाभितः ॥ २ ॥
तत्पञ्चमांशं निखनेन्मेदिन्यां तन्त्रवित्तमः ।
नवहस्तं पञ्चहस्तं वा सप्तहस्तं यथामति ॥ ३ ॥
कर्त्तुर्दक्षिणहस्तस्य मध्यमांगुलिपर्वणः ।
मध्यस्य दैर्घ्यमानेन मानांगुलमुदीरितम् ॥ ४ ॥
गृहादिकुण्डकरणं मण्डलं वैदिकं तथा ।
मानांगुलेन कर्त्तव्यं नान्यैरपि कदाचन ॥ ५ ॥
प्रतिमाकरणे चैव मानांगुलमुदीरितम् ।
वापी-कूप-तडागादि-दीर्घिकासेतुमेव च ॥ ६ ॥
मुष्ट्यंगुलेन मतिमान् कारयेत्फलहेतवे ।
रथादिगोलिका चैव पोतं शकटमेव च ॥ ७ ॥
लंबांगुलेन कर्त्तव्यं नान्येन तु कदाचन ।
मुष्ट्यंगुलप्रमाणानि यत्किञ्चित्कथितानि च ॥ ८ ॥
यजमानस्य कर्त्तव्यं नान्यदपि कदाचन ।
मसृणं रचयेद् गेहं षोडशस्तम्भसंयुतम् ॥ ९ ॥
मध्ये चतुष्टयं तत्र निरूप्येद् द्वादशाभितः ।
चतुर्द्वारसमायुक्तं चतुष्कोणसमन्वितम् ॥ १० ॥
विश्वकर्मानुष्ठितेन यथाशोभं निवेशयेत् ।
अष्टदिक्षु ध्वजानष्टौ ततो दिव्यान्तवर्णिनः ॥ ११ ॥
पुष्पमालावितानाढ्यं सर्वाश्चर्यमनोहरम् ।
तस्याग्रे चोत्तरे वापि रचयेद्यज्ञमण्डपम् ॥ १२ ॥
तत्तत्स्थले चैकगेहे कुण्डमेकं विनिर्मयेत् ।
मध्यार्चां वैदिकीं च कुर्याद्दर्पणोदरसन्निभाम् ॥ १३ ॥
मण्डपांतस्त्रिभागस्य चैकभागेन निर्मिताम् ।
मुष्टिमात्रोन्नतां सर्वलक्षणैर्लक्षणान्विताम् ॥ १४ ॥

ततः कुण्डं च रचयेल्लक्षणं तस्य मे शृणु ।
पूर्वापरायतं सूत्रं हस्तमात्रं प्रसार्य च ॥ १५ ॥
तस्याग्रयोर्मत्स्ययुग्मं कुर्यात्स्पष्टं यथा भवेत् ।
द्विभागौ कृत्य तत्सूत्रं पातयेद्दक्षिणोत्तरम् ॥ १६ ॥
तदग्रयोर्मत्स्ययुग्मं कुर्यात्स्पष्टं यथाभवेत् ।
चतुर्दिक्षु चतुःसूत्रं पातयेत्तत्प्रमाणतः ॥ १७ ॥
चतुरस्रं भवेत्कुण्डं सर्वलक्षणलक्षितम् ।
ब्राह्मणैः क्षत्रियैर्वैश्यैः कुर्यात्स्वयमनुष्ठितम् ॥ १८ ॥
सर्वकर्मकरं प्रोक्तं शान्त्यादिकपट्कर्मसु ।
अनेन जनयेत्सर्वकुण्डानि मनुवित्तमः ॥ १९ ॥
ततः कुण्डं खनेन्मन्त्री यथाशास्त्रविधानवित् ।
त्यक्त्वा सर्पस्य गात्रं च शिरोदेशं प्रयत्नतः ॥ २० ॥
शिरोघाताद् भवेन्मृत्युः पिण्डेपु पिण्डघातनम् ।
पुच्छे तु दुःखसम्भूतिः क्रोडे सर्वार्थसाधनम् ॥ २१ ॥
यावान् कुण्डस्य विस्तारः खननं यावदीरितम् ।
कण्ठमेकांगुलं त्यक्त्वा मेखलास्तिस्र एव हि ॥ २२ ॥
कुण्डस्य फलमानेन वेदाग्निनयनांगुलाः ।
होतुस्ते तु भवेयुस्ताश्चतुरस्राः सुशोभनाः ॥ २३ ॥
होतुरग्रे योनिवासां कुञ्जराधरसन्निभाम् ।
पट्चतुर्द्व्यंगुलयोर्विस्तारोन्नतशालिनी ॥ २४ ॥
( स्थलादारभ्य नालं स्यान्न रंध्रं योनिमध्यतः । )
पडङ्गुला भवेद्दीर्घा चतुरंगुलविस्तृता ।
द्व्यंगुला चोन्नता योनिरेपा लक्षणलक्षिता ॥ २५ ॥
स्थलादारभ्य नालं स्यान्न रंध्रं योनिमध्यतः ।
सूक्ष्माग्रं स्थूलमूलं च सरंध्रं नालमिष्यते ॥ २६ ॥
योन्या मध्ये लिलं कुर्यात्तदाज्यग्राहिसंज्ञकम् ।
कुंडमध्ये भवेन्नाभिः फलं वा चतुरस्रकम् ॥ २७ ॥
द्व्यंगुलं चोन्नतं तत्तु चतुरंगुलविस्तृतम् ।
अर्द्धांगुलं तु योन्यग्रं कुर्यादीपदधोमुखम् ॥ २८ ॥
यवद्वयप्रमाणेन कुण्डेष्वन्येपु वर्द्धयेत् ।
कण्ठं तु द्व्यंगुलं तत्र वर्द्धयेत्कुण्डमानतः ॥ २९ ॥
कर्णसूत्रप्रमाणेन द्विहस्तं कुण्डमुद्धरेत् ।
सर्वकुण्डेपु सर्वत्र वर्द्धयेत्तद्विनामुना ॥ ३० ॥

कुण्डं तु प्रकृतिः सूक्ष्मा सर्वलक्षणलक्षिता।
उभौ पादौ करौ तस्य भवेत्कोणचतुष्टयम् ॥ ३१ ॥
उदरं कुण्डमित्युक्तं योनिः कारणरूपिणी।
तेन तत्रैव हव्यानां विधानं तन्मयत्वतः ॥ ३२ ॥
फलं वितनुते सम्यगन्यथा विफलायते।
सात्त्विकी मेखला पूर्वा द्वितीया राजसी स्मृता ॥ ३३ ॥
तृतीया तामसी ज्ञेया इत्युक्तं कुंडलक्षणम्।
मण्डपस्योत्तरे भागे मेखला पूर्वापरोन्नता ॥ ३४ ॥
गूढां कुर्याद्यथा शोभां सर्वसृष्टिमहत्पराम्।
पूर्वापरायतं तत्र पञ्चसूत्रनिपातनात् ॥ ३५ ॥
मध्ये मध्ये विलुप्येत तत् स्याद्द्वादशकोष्ठकम्।
पञ्चवर्णरजोभिस्तु पदानि तानि पूरयेत् ॥ ३६ ॥
पालिकाः पञ्चमुख्यश्च शरावाणि च पातयेत्।
द्विषड्द्व्यष्टचतुर्विंशदुच्छ्रितानि यथाक्रमम् ॥ ३७ ॥
तावन्मात्रमुखान्यूर्ध्वपदानि परिकल्पयेत्।
नारायणमहेशानब्रह्मरूपाणि तान्यपि ॥ ३८ ॥
पालिका पञ्चमुखी तु शरावाणि ततः परम्।
प्रक्षालितानि मन्त्रेण पुण्यानि तानि चैव हि ॥ ३९ ॥
संवेष्टितानि परितस्त्रिगुणैः शुभतन्तुभिः।
मृद्वालुकाकरीषैश्च पूरितानि समन्ततः ॥ ४० ॥
समर्चितस्वदेवानि पश्चिमादिक्रमेण वै।
विन्यस्य शालिश्यामानि प्रियंगुफलसर्षपान् ॥ ४१ ॥
मुद्गमाषौ शिम्बिकुलत्थं चाढकीं यवसं तथा।
प्रक्षालितानि शुद्धेन जलेन तदनन्तरम् ॥ ४२ ॥
अर्चितस्वदेवानि मूलमन्त्रार्चितानि वै।
विप्राशिषा पञ्चघोषैः सह निःसार्य तास्वथ ॥ ४३ ॥
निषिच्य तु हरिद्भिश्च नमस्यतु पुनः पुनः।
वसनेन समाच्छाद्य नवीनेन ततः परम् ॥ ४४ ॥
शुद्धाद्भिरभिषिच्याथ सायं प्रातर्मुहुर्मुहुः।
इत्येवं सप्तरात्रं ना नवरात्रमथापि वा ॥ ४५ ॥
स्थापयेद्वापयेच्चैव रात्रिशेभ्यो बलिं निशि।
नाडी तिलं हरिद्रा च सक्तुचूर्णं तथा दधि ॥ ४६ ॥
एतैः प्रथमरात्रौ च भूतेभ्यो बलिमुत्सृजेत्।

द्वितीयायां क्षिपेद्रात्रौ पितृभ्यस्तिलतण्डुलैः ॥ ४७ ॥
तृतीयायां च यक्षेभ्यः सुलाजादधिशक्तुभिः ।
चतुर्थ्यां रजनौ दद्यान्नागेभ्यश्च पुनर्बलिम् ॥ ४८ ॥
नारिकेरोदकैर्मिश्रं सक्तुचूर्णं मनोहरम् ।
पद्माक्षतं ब्रह्मणे च पञ्चम्यामुत्सृजेद्बलिम् ॥ ४९ ॥
अपूपमन्नं शर्वाय षष्ठ्यामथ समाचरेत् ।
चूडोदनं विष्णवे च सप्तम्यां वितरेद्बलिम् ॥ ५० ॥
प्रणवादिचतुर्थ्यन्तं स्वनाम च नमोंतकम् ।
बलिमन्त्रस्तथैव स्यादावाहनविसर्जनम् ॥ ५१ ॥
त्रिविधानां च पात्राणां परतो बहिरेव च ।
अष्टदिक्षु च संदद्याल्लोकपालेषु यत्नतः ॥ ५२ ॥
प्रोक्तेषु तेषु पात्रेषु विष्णुब्रह्मरुद्रान्यजेत् ।
मुद्गप्रियंगुनिष्पावे वायुरग्निःकुलत्थके ॥ ५३ ॥
आढक्यां रक्षसां देहो वृद्धौ वैवस्वतस्तिले ।
इन्द्रः श्यामे राजमाषे वरुणश्च तथा मुने ॥ ५४ ॥
वस्त्रखण्डे दृढं बद्ध्वा किंचिज्जलं क्षिपेत्ततः ।
उद्धृत्य यामत्रितये समतीते च वापयेत् ॥ ५५ ॥
बीजानां दैवतं सोमः स रात्रौ कान्तिमान्यतः ।
तस्मादाहृत्य बीजानि निशायामेव वापयेत् ॥ ५६ ॥
प्ररूढान्यंकुराण्येव नोदीक्षेत कदाचन ।
आचार्य एव प्रविशेत्तच्छिष्यो वा तदाज्ञया ॥ ५७ ॥
प्ररूढैरंकुरैः कर्त्तुर्निर्दिशेच्च शुभाशुभम् ।
श्यामैः कृष्णैरंकुरैरर्थहानिश्च दुःखभाक् ॥ ५८ ॥
कुब्जैरर्द्धविप्ररूढैर्मृतिं कुर्यान्न संशयः ।
आचार्यः कारयेन्नैव प्रलयं वीक्ष्य यत्नतः ॥ ५९ ॥
शान्तिकं सर्वथा कुर्यात् कर्तुरीप्सितसिद्धये ॥५९॥

इति गौतमीये महातन्त्रे षष्ठोऽध्यायः ॥ ६ ॥

---

# अथ सप्तमोऽध्यायः

अथ दीक्षां प्रवक्ष्यामि सर्वसिद्धिप्रवर्त्तिकाम् ।
यां विना नैव सिद्धः स्यान्मन्त्रो वर्षशतैरपि ॥ १ ॥
तदङ्गं कथितं पूर्वमिदानीं कथ्यते शृणु ।
ददाति दिव्यभावं च क्षिणुयात्पापसंहृतिम् ॥ २ ॥
तेन दीक्षेति विख्याता मुनिभिस्तंन्त्रपारगैः ।
शिष्यः स्नातः सुवेशश्च सर्वद्रव्यसमन्वितः ॥ ३ ॥
आचार्यं वृणुयाद् भक्त्या वस्त्रालंकारभूषणैः ।
कुर्यान्नान्दीमुखं श्राद्धं ब्राह्मणान् परितोषयेत् ॥ ४ ॥
गोभूहिरण्यवस्त्राद्यैस्तोपयेद् गुरुमात्मनः ।
यथा ददाति सन्तुष्टः प्रसन्नो वरदो मनुम् ॥ ५ ॥
इदानीं पूर्वकृत्यं च प्रसङ्गात् कथयामि ते ।
कृत्वाधिकारितां याति मन्त्रयन्त्रार्चनादिषु ॥ ६ ॥
येन विना न सिद्धिः स्यान्नरकं च प्रतिपद्यते ।
ब्राह्मे मुहूर्त्ते चोत्थाय चिन्तयेद् गुरुदैवतम् ॥ ७ ॥
स्वमूर्द्धनि सहस्रारे कृष्णाख्ये परविन्दके ।
शशांकायुतसंकाशं वराभयलसत्करम् ॥ ८ ॥
शिवेनैक्यं समुन्नीय ध्यायेत्परगुरुं धिया ।
मानसैरुपचारैश्च सन्तर्प्य मनसा सुधीः ॥ ९ ॥
स्तोत्रैः स्तुत्वा नमस्कुर्यान्मन्त्रदेवेशमर्चयेत् ।
अज्ञानतिमिरांधस्य ज्ञानांजनशलाकया ॥ १० ॥
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ।
मूलाधारे त्रिकोणाख्ये कोटिसूर्यसमत्विषि ॥ ११ ॥
ध्यायेत्कुण्डलिनीं नित्यां कामबीजोपरि स्थिताम् ।
श्यामां सूक्ष्मां च विश्वस्य सृष्टिस्थितिलयात्मिकाम् ॥१२॥
विश्वातीतां ज्ञानरूपां चिन्तयेदूर्ध्ववाहिनीम् ।
चक्रषट्कं विनिर्भिद्य प्रापयित्वा परे शिवे ॥ १३ ॥
तद्भेदसमापन्नामनाकुलमनाः स्मरेत् ।
प्रापयित्वा सुधापूर्णां प्लावयेच्छक्तिमण्डलम् ॥ १४ ॥

तेनैव चक्रभेदेन मूलाधारं समानयेत् ।
अनेन ध्यानयोगेन मन्त्राः सिध्यन्ति नान्यथा ॥ १५ ॥
वैरिपक्षे स्थिता ये च वृद्धा यौवनगर्विताः ।
ये चान्ये दोषदुष्टाश्च सिध्यन्त्येव न चान्यथा ॥ १६ ॥
परेण च स्वमात्मानं कृष्णाख्येन विभावयेत् ।
अहं कृष्णो न चान्योऽस्मि ब्रह्मैवाहं न शोकभाक् ॥ १७ ॥
सच्चिदानन्दरूपोहं नित्यमुक्तस्वभाववान् ।
त्वमेवाहमहं त्वं च सच्चिन्मात्रवपुर्भवान् ॥ १८ ॥
आवयोरन्तरा कृष्ण नश्यत्वाज्ञाबलात्तव ।
अहं तीर्णो भवं घोरं कृत्यं किंचिन्न मेऽस्ति हि ॥ १९ ॥
तथापि देहि मे नाथ आज्ञां तव निषेवते ।
जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः ।
केनापि देवेन हृदि स्थितेन यथा नियुक्तोस्मि तथा करोमि ॥२०॥
एवं संप्रार्थ्य मनसा कुर्यात् पौर्वाह्णिकीं क्रियाम् ।
दीक्षितस्य विधानेन तथा च ब्रह्मचारिणाम् ॥ २१ ॥
वानप्रस्थस्थितानां च शौचादि द्विगुणा क्रिया ।
सन्न्यासिनां विशेषेण कृत्यं चतुर्गुणं भवेत् ॥ २२ ॥
आचम्य विधिवन्मन्त्री शुद्धौ देशे च संविशेत् ।
तथा प्रातस्तनीं सन्ध्यां कुर्याद् गुरुनिषेवकः ॥ २३ ॥
जले संवाह्य तीर्थानि त्रिवारं मूलमन्त्रतः ।
क्षिप्त्वा भूमौ कुशाग्रेण सप्तधा मूर्ध्नि सेचयेत् ॥ २४ ॥
वामे जले समादाय मन्त्रयेद्दक्षिणेन तु ।
पुनर्वामेन संक्षिप्त्वा मूर्ध्नि सिंचेत्त्रिवारकम् ॥ २५ ॥
उपदेशेन गुरुणा मुद्रया दिव्यसंज्ञया ।
इडयाकृष्य तत्तोयं क्षालितांतर्मलं पुनः ॥ २६ ॥
दक्षयाऽत्र स्थिता वज्रशिलायां पोथयेत्ततः ।
अश्वमन्त्रेण विधिवत् पुनराचमनं चरेत् ॥ २७ ॥
अघमर्षणमेतद्धि सर्वपापनिकृन्तनम् ।
तोयांजलिं पुनः क्षिप्त्वा सूर्यमण्डलमध्यगाम् ॥ २८ ॥
गायत्रीं भावयेद्देवीं सूर्यासनकृताश्रयाम् ।
उद्यदादित्यसंकाशां पुस्तकाक्षकरां स्मरेत् ॥ २९ ॥
कृष्णाजिनांबरां ब्राह्मीं ध्यायेद् भावांकितेऽम्बरे ।
उत्थाय कृष्णगायत्रीं तद्भेदशतं जपेत् ॥ ३० ॥

कृष्णाय विद्महे पश्चाद् दामोदराय धीमहि।
तन्नो विष्णुः प्रचोदयाद् गायत्र्येषा प्रकीर्तिता ॥ ३१ ॥
सर्ववेदमयी सर्वपावनी वरदायिनी।
प्रणवाद्या मुक्तिकरी श्रीबीजाद्या च भोगदा ॥ ३२ ॥
हृल्लेखाद्या महासिद्धिकरी सर्ववशंकरी।
वाग्भवाद्या च वैदुष्या कामाद्या जनरंजनी ॥ ३३ ॥
एवं ते कथितो मन्त्रः सन्ध्यामन्त्रफलाप्तये।
न कुर्याद्यदि मोहेन न दीक्षाफलमाप्नुयात् ॥ ३४ ॥
संक्षेपसन्ध्यामथवा कुर्यान्मन्त्री ह्यशक्तितः।
सायं प्रातश्च मध्याह्ने कृष्णं ध्यात्वा मनुं जपेत् ॥ ३५ ॥
इति सन्ध्यात्रयं प्रोक्तं कर्मणां सिद्धिदायकम्।
सन्ध्यायां पतितायां वा गायत्रीं दशधा जपेत् ॥ ३६ ॥
यथाप्राणं यथाज्ञानं तथा कुर्यादतन्द्रितः।
यद्यत्कृत्यं मंगलार्थं तत्तत्कुर्यात्तथा तथा ॥ ३७ ॥
आदर्शदर्शनं कुर्याद् घृतस्पर्शं च कज्जलम्।
सत्पोष्यपोषणार्थं यत्क्षेमं योगं च चिन्तयेत् ॥ ३८ ॥
स्नायाच्च कृष्णपूजार्थं नद्यादौ विमले जले।
पूजा च पञ्चधा प्रोक्ता तासां भेदाञ्छृणुष्व मे ॥ ३९ ॥
अभिगमनोपादाने योगः स्वाध्याय एव च।
इज्या पञ्चप्रकारार्चा क्रमेण कथयामि ते ॥ ४० ॥
तत्राभिगमनं नाम देवतास्थानमार्ज्जनम्।
उपलेपनं निर्माल्यदूरीकरणमेव च ॥ ४१ ॥
उपादानं नाम गन्धपुष्पादिचयनं तथा।
इज्या नाम चेष्टदेवपूजनं च यथार्थतः ॥ ४२ ॥
स्वाध्यायो नाम नामानुसंधानपूर्वको जपः।
सूक्तस्तोत्रादिपाठश्च हरेः संकीर्त्तनं तथा ॥ ४३ ॥
तत्त्वादिशास्त्राभ्यासश्च स्वाध्यायश्च प्रकीर्तितः।
योगो नाम स्वदेवस्य स्वात्मत्वेनैव भावना ॥ ४४ ॥
इति पञ्चप्रकारार्चा कथिता तव सुव्रत।
सामीप्यसारूप्यसादृश्यसायुज्यफलदा क्रमात् ॥ ४५ ॥
प्रातःकाले मध्याह्ने वा स्नानार्थं तीर्थमाश्रयेत्।
स्नानं तु द्विविधं प्रोक्तमंतर्बाह्यविभेदतः ॥ ४६ ॥
भ्रुवि स्थितं पुंडरीकाक्षं मन्त्रमूर्त्तिं प्रभुं स्मरेत्।

अनन्तादित्यसंकाशं वासुदेवं चतुर्भुजम् ॥ ४७ ॥
शंखचक्रदापद्मधारिणं वनमालिनम् ।
तत्पादोदकजां धारां निपतन्तीं स्वमूर्द्धनि ॥ ४८ ॥
चिन्तयेद्ब्रह्मरन्ध्रेण प्रविशन्तीं स्वकां तनुम् ।
तया संक्षालयेत्सर्वमन्तर्देहगतं मलम् ॥ ४९ ॥
तत्क्षणाद्विरजा मन्त्री जायते स्फटिकोपमः ।
इदं स्नानवरं बाह्यतीर्थस्नानाधिकं स्मृतम् ॥ ५० ॥
योगिनां स्नानमेतद्धि कथितं परमाद्भुतम् ।
बाह्यस्नानं ततः कुर्याद्यथाशास्त्रं विधानवित् ॥ ५१ ॥
मलप्रक्षालनस्नानं स्वशाखोक्तं समाचरेत् ।
मन्त्रस्नानं ततः कुर्यात् कर्मणां सिद्धिहेतवे ॥ ५२ ॥
अस्त्रेणालोड्य मृत्स्नां वै त्रिभागां तां तु कारयेत् ।
जलेनैकं द्वादशधा निक्षिपेदस्त्रमुच्चरन् ॥ ५३ ॥
एकं मूर्द्धादिनाभ्यन्तं तथैव परिलेपयेत् ।
शेषं पादादिनाभ्यन्तं तथैव परिलेपयेत् ॥ ५४ ॥
गंगे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥ ५५ ॥
आवाहयामि त्वां देवि स्नानार्थमिह सुन्दरि ।
एहि गंगे नमस्तुभ्यं सर्वतीर्थसमन्विते ॥ ५६ ॥
एवमावाह्य विधिवन्मूलमन्त्रेण मन्त्रयेत् ।
आमन्त्र्याम्भसि संयोज्य सोमसूर्याग्निमण्डलम् ॥ ५७ ॥
विचिन्त्य मन्त्री तन्मध्ये निमज्जेन्मूलमुच्चरन् ।
उत्थायाचम्य तत्पश्चात् षडंगन्याससंयुतः ॥ ५८ ॥
आत्मानं दशधा सिंचेन्मुद्रया कलशाख्यया ।
सप्तकृत्वोऽभिषिञ्चे मनुना मन्त्रितैर्जलैः ॥ ५९ ॥
वामहस्तकृता मुष्टिं दक्षहस्तेन वेष्टयेत् ।
कलशाख्या भवेन्मुद्रा सर्वपापहरा शुभा ॥ ६० ॥
शालिग्रामशिलातोयं तुलसीदलमिश्रितम् ।
कृत्वा शंखे भ्रामयँस्त्रिर्निक्षिपेन्निजमूर्द्धनि ॥ ६१ ॥
शालिग्रामशिलातोयमपीत्वा यस्तु मस्तके ।
प्रक्षेपणं प्रकुरुते ब्रह्महा स निगद्यते ॥ ६२ ॥
विष्णुपादोदकात् पूर्वं विप्रपादोदकं पिबेत् ।
विरुद्धमाचरन् मोहादात्महा स निगद्यते ॥ ६३ ॥

पृथिव्यां यानि तीर्थानि तानि तीर्थानि सागरे ।
ससागराणि तीर्थानि पदे विप्रस्य दक्षिणे ॥ ६४ ॥
पीडयित्वा पदं चोरू प्रक्षाल्याचम्य वाग्यतः ।
धारयेद्वाससी शुद्धे परिधानोत्तरीयके ॥ ६५ ॥
अछिन्नाच्छदशे शुक्ले आचामेत्पीठसंस्थितः ।
ऊर्ध्वपुंड्रं चन्दनेन कृत्वा संध्यां समाचरेत् ॥ ६६ ॥
पूर्वं तु कथिता संध्या ध्यायेद्देवीं समाहितः ।
श्यामवर्णां चतुर्बाहुं शंखचक्रलसत्कराम् ॥ ६७ ॥
गदापद्मधरां देवीं सूर्यासनसमाश्रयाम् ।
ध्यात्वा जलाञ्जलीन् क्षिप्त्वा तर्पयेत् कृष्णमव्ययम् ॥ ६८ ॥
गुरुपंक्तिं पुरा तर्प्य तर्पयेदिष्टदेवताः ।
नारदं पर्वतं विष्णुं निशठोद्धवदारुकान् ॥ ६९ ॥
विष्वक्सेनं च शैनेयं गुरुं च तर्पयेत्त्रिशः ।
पंचविंशतिसंख्या वा दशधा वा त्रिधापि वा ॥ ७० ॥
मूलमंत्रं समुच्चार्य्य श्रीकृष्णं तर्पयाम्यहम् ।
नमोऽन्तोऽयं मनुः प्रोक्तस्तर्पणे विधितत्परैः ॥ ७१ ॥
सायाह्ने वरदां देवीं गायत्रीं संस्मरेद्यतिः ।
शुक्लां शुक्लाम्बरधरां वृषासनकृताश्रयाम् ॥ ७२ ॥
त्रिनेत्रां वरदां देवीं शूलं च नृकरोटिकाम् ।
सूर्यमंडलमध्यस्थां ध्यायन् गायत्रीमभ्यसेत् ॥ ७३ ॥
ललाटे च गदा कार्य्या मूर्ध्नि चापं शरस्तथा ।
नन्दकं चैव हृन्मध्ये शङ्खं चक्रं भुजद्वये ॥ ७४ ॥
शंखचक्रांकितो विप्रः श्मशाने म्रियते यदि ।
प्रयागे या गतिः प्रोक्ता सा गतिस्तस्य गौतम ॥ ७५ ॥
पूजार्थं जलमादाय सूर्ये तीर्थानि योजयेत् ।
स्मृत्वा ज्योतिर्मयं विष्णुं गायत्रीं मनसा स्मरेत् ॥ ७६ ॥
शतावृत्त्या जपेत्तां तु धर्मकामार्थसिद्धये ।
सर्वपापक्षयं याति ज्ञानमुत्पद्यतेऽचिरात् ॥ ७७ ॥
मूलमंत्रं हृदि स्मृत्वा यायाद् वै यागमंडपम् ।
हस्तौ पादौ च प्रक्षाल्य आचम्य वाग्यतः सुधीः ॥ ७८ ॥
सूर्यपूजां ततः कुर्याद्विशेषेण तु दीक्षितः ।
पुनर्हस्तौ च पादौ च प्रक्षाल्य विधिना यतिः ॥ ७९ ॥
आचमनं ततः कुर्य्याद्विशेषाद्वैष्णवान्वये ।

केशवाद्यैस्त्रिभिः पीत्वा द्वाभ्यां प्रक्षालयेत्करौ ॥ ८० ॥
द्वाभ्यामोष्ठौ च संमृज्य द्वाभ्यां मृज्यान्मुखं ततः ।
एकेन हस्तं प्रक्षाल्य पादावपि तथैकतः ॥ ८१ ॥
संप्रोक्ष्यैकेन मूर्द्धानं ततः संकर्षणादिभिः ।
आस्यनासाक्षिकर्णांश्च हृन्नाभ्युदरकं भुजौ ॥ ८२ ॥
स्पृशेदेवं भवेदेवाचमनं वैष्णवान्वये ।
एवमाचमनं कृत्वा साक्षान्नारायणो भवेत् ॥ ८३ ॥
केशवाद्याः पुरा प्रोक्ता वक्ष्ये संकर्षणादिकान् ।
संकर्षणो वासुदेवः प्रद्युम्नश्चानिरुद्धकः ॥ ८४ ॥
पुरुषोत्तमाधोक्षजनृसिंहाश्च तथाऽच्युतः ।
जनार्दनोपेन्द्रहरिविष्णवो द्वादशेरिताः ॥ ८५ ॥

इति गौतमीये महातन्त्रे सप्तमोऽध्यायः ॥ ७ ॥

---

# अथ अष्टमोऽध्यायः

अथ द्वादशशुद्धिश्च वैष्णवानामिहोच्यते।
गृहोपसर्पणं चैव तथानुगमनं हरेः ॥ १ ॥
भक्त्या प्रदक्षिणं चैव पादयोः शोधनं पुनः।
पूजार्थं पत्रपुष्पाणां भक्त्यैवोत्तोलनं हरेः ॥ २ ॥
करयोः सर्वशुद्धीनप्रमियं शुद्धिर्विशिष्यते।
तन्नामकीर्त्तनं चैव गुणानामपि कीर्त्तनम् ॥ ३ ॥
भक्त्या श्रीकृष्णदेवस्य वचसः शुद्धिरिष्यते।
तत्कथाश्रवणं चैव तस्योत्सवानिरीक्षणम् ॥ ४ ॥
श्रोत्रयोर्नेत्रयोर्वापि शुद्धिः सम्यगिहोच्यते।
पादोदकस्य निर्माल्यमालानामपि धारणम् ॥ ५ ॥
उच्यते शिरसः शुद्धिः प्रणतस्य हरेः पुनः।
आघ्राणं गंधपुष्पादेर्निर्माल्यस्य तपो घनम् ॥ ६ ॥
विशुद्धिः स्यादनंन्तस्य घ्राणस्यापि विधीयते।
पत्रपुष्पादिकं यच्च कृष्णपादयुगार्चितम् ॥ ७ ॥
तदेकं पावनं लोके तद्धि सर्वं विशोधयेत्।
वृन्दावनं ततो . ध्यायेत्पूर्वोक्तेनैव वर्त्मना ॥ ८ ॥
तन्मध्ये स्वर्णभूमिं च ध्यायेन्नवगृहं ततः।
पूर्वद्वारि ततो गत्वा सामान्यार्घं विशोधयेत् ॥ ९ ॥
अस्त्रेण शङ्खं प्रक्षाल्य हृन्मंत्रेण प्रपूरयेत्।
मंत्रयेत्प्रणवेनैव सामान्यार्घमिदं स्मृतम् ॥ १० ॥
द्वार्योवाह्य यजेत्तत्र सर्वविघ्नोपशान्तये।
नन्दः सुनन्दश्चंडश्च प्रचंडो बल एव च ॥ ११ ॥
प्रचलो भद्रनामा च भूभद्रो विघ्नवैष्णवाः।
द्वौ द्वौ विष्णोः प्रतिद्वारे पुरतो विनतासुतः ॥ १२ ॥
प्रणवादिनमोऽन्तेन नाममंत्रेण शोधयेत्।
ततोऽक्षतान् समादाय दिक्षु नाराचमुद्रया ॥ १३ ॥
प्रक्षिपेदस्त्रमंत्रेण गृहांतर्विघ्नशान्तये।
अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ॥ १४ ॥

ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया।
भूतसंघान् समुत्सार्य्य दक्षपादपुरःसरम् ॥ १५ ॥
ध्यायन् विष्णुं गृहाभ्यन्तः प्रविशेन्नतकंधरः।
यज्ञे तत्रैव ब्रह्माणं वास्तुदोषप्रशान्तये ॥ १६ ॥
प्राङ्मुखः संयतात्मा च संविशेद्विहितासने।
तथा मृद्वासने मंत्री पटाजिनकुशोत्तरे ॥ १७ ॥
काष्ठासने भवेद्रोगो वंशे वंशक्षयो भवेत्।
शैलासने च वाग्रोधः पल्लवे मतिविभ्रमः ॥ १८ ॥
धरण्यां दुःखसंभूतिः पीडनं राजतो भवेत्।
गंधपुष्पाणि पात्राणि स्वदक्षे च निवेशयेत् ॥ १९ ॥
दीपावलिर्यथैवेच्छा नैवेद्यं पुरतो न्यसेत्।
सुवासिताम्बुसंपूर्णं वामे कुम्भं सुशोभनम् ॥ २० ॥
पृष्ठदेशे पात्रमेकं करक्षालनाय संन्यसेत्।
ब्रह्मासनमिदं प्रोक्तं योगिनां हृदयंगमम् ॥ २१ ॥
जानूर्वोरंतरे कृत्वा सम्यक् पादतले उभे।
ऋजुकायो विशेद्योगी स्वस्तिकं तत् प्रचक्षते ॥ २२ ॥
पद्मासनं स्वस्तिकं वा आचार्यो विधिना विशेत्।
ऊर्वोरुपरि विन्यसेत्सम्यक् पादतले उभे ॥ २३ ॥
शिष्यश्च वृणुयाद् भक्त्या आचार्य्यं भक्तितत्परः।
मंगलांकुरपत्राणि चतुर्दिक्षु निवेशयेत् ॥ २४ ॥
आशीर्वोग्भिर्द्विजातीनां वैष्णवं यागमाचरेत्।
शिष्यश्च वृणुयाद् भक्त्या आचार्य्यं भक्तितत्परः ॥ २५ ॥
वासोऽलंकारविभवैर्वित्तशाठ्यविवर्जितः ।
ऋत्विजं वृणुयात्तत्र दश पञ्च द्वयं तथा ॥ २६ ॥
पुण्याहं वाचयित्वा च पञ्चघोषपुरःसरम्।
भूतशुद्धिं ततः कुर्यात् सर्वात्मत्वविशुद्धये ॥ २७ ॥
कृताञ्जलिपरो भूत्वा वामं गुरुचयं यजेत्।
गुरुं च परमादिं च परापरगुरुं तथा ॥ २८ ॥
दक्षपार्श्वे गणेशं च मूर्ध्नि देवं विभावयेत्।
ततो मण्डपमध्ये तु स्थण्डिलं गोमयाम्बुना ॥ २९ ॥
उपलिप्य यथान्यायं तस्य मध्ये निधापयेत्।
सूत्रं प्राक्प्रत्यगग्रं च विप्राशीर्वचनैः सह ॥ ३० ॥
गुणितेनाभितो मत्स्यौ मध्यादारभ्य विन्यसेत्।

तन्मध्यस्थं तु याम्योदगग्रं सूत्रं निधापयेत् ॥ ३१ ॥
ततो मध्ये न्यसेद्धस्तमानमात्रं दिश प्रति ।
सूत्रेषु मकरान्न्यसेत्स्पष्टानन्यतमः पुमान् ॥ ३२ ॥
सूत्राग्रमकरेभ्यश्च न्यसेत्कोणेषु मत्स्यकान् ।
कोणमत्स्यस्थिताग्राणि दिक्षु सूत्राणि पातयेत् ॥ ३३ ॥
ततो भवेच्चतुःकोष्ठं चतुरस्रं तु मण्डलम् ।
तत्राग्निमारुतं सूत्रं नैर्ऋत्ये पञ्च पातयेत् ॥ ३४ ॥
प्राग् याम्यवरुणोदीच्यसूत्राग्रमकरेषु च ।
निहिताग्रलग्नसूत्रं चतुष्कं प्रति पातयेत् ॥ ३५ ॥
षट्पञ्चाशत्पदानि स्युरधिकानि शतद्वयात् ।
यदा तदा यो विभजेत्पदादि क्रमशः सुधीः ॥ ३६ ॥
पदैः षोडशकैर्मध्ये पद्मं वृत्तत्रयान्वितम् ।
तैरष्टचत्वारिंशद्भी राशिः स्याद्वीथिशोभिभिः ॥ ३७ ॥
सद्वादशैः पदशतैः शोभाख्याः स्युश्चतुष्पदाः ।
चतुष्पदाश्च शोभाः स्युः षट्पदं कोणकं भवेत् ॥ ३८ ॥
वृत्तवीथ्यो वा रचयेन्मध्ये सूत्रचतुष्टयम् ।
प्राग्याम्यवरुणोदीच्यं तद्भवेद् राशिमण्डलम् ॥ ३९ ॥
कर्णिकायाः केसराणां दलसंधेर्दलस्य च ।
दलाग्रवृत्तिराशीनां वीथ्या शोभोपशोभयोः ॥ ४० ॥
वृत्तानि चतुरस्राणि व्यक्तस्थानानि कल्पयेत् ।
भवेन्मण्डलमूर्ध्वोर्ध्वं कर्णिका चतुरङ्गुला ॥ ४१ ॥
द्व्यङ्गुलाः केसराश्च स्युः सन्धिश्च चतुरङ्गुलः ।
तथा दलानां मानात्स्यादग्रं द्व्यङ्गुलकं भवेत् ॥ ४२ ॥
अन्तराले पृथग् वृत्तत्रये द्व्यङ्गुलमुच्यते ।
ततश्च राशिचक्रं स्यात् स्वस्ववर्णविभूषितम् ॥ ४३ ॥
राशिमण्डलकैः कुर्यात् षड्भिरष्टाभिरेव वा ।
द्वात्रिंशदङ्गुलं ह्येतत् परत्वात्तावदिष्यते ॥ ४४ ॥
वृत्तं चक्रं वदन्त्येके चतुरस्रं तु तद्विदः ।
यद् वा वर्तुलमेव स्याच्चक्रं द्वादशराशयः ॥ ४५ ॥
ते स्युः पिपीलिकामध्या मातुलुङ्गनिभा अपि ।
चक्रं तु चतुरस्रं चेदस्माद् द्वादशराशयः ॥ ४६ ॥
भवेयुः पङ्कजदल-निभा वा कथिता बुधैः ।
तद्बहीः रुचिरान् कुर्याच्चतुरः कल्पशाखिनः ॥ ४७ ॥

जलजैः स्थलजैश्चापि सुमनोभिः समन्वितान् ।
हंस-सारस-कारण्ड-शुक-भ्रमर-कोकिलैः ॥ ४८ ॥
मयूरचक्रवाकाद्यैरारूढविटपांश्च तान् ।
सर्वर्तुनिर्वृतिकरान् विलोचनमनोहरान् ॥ ४९ ॥
तद्बहिः पार्थिवं कुर्यान्मण्डलं कृष्णकोणकम् ।
मण्डलानि तु तद्देशे राशींस्तानेव कारयेत् ॥ ५० ॥
राशावन्यत्र रचयेत् प्रमाणादन्यमण्डलम् ।
आवाह्य मण्डलादन्यत्रार्चयेत् त्वन्यदेवताः ॥ ५१ ॥
उभाभ्यां लभते शापं मन्त्री तरलदुर्मतिः ।
कलात्मकस्य देवस्य राशिव्याप्तिमजानता ॥ ५२ ॥
कृतं समस्तं व्यर्थं स्यादज्ञेन ज्ञानमानिना ।
तस्मात् सर्वप्रयत्नेन राशीन् साधिपतीन् क्रमात् ॥ ५३ ॥
अवगम्यानुरूपाणि मण्डलानि च नान्यधीः ।
उपचक्रे चार्चयितुं होतुं वा सर्वदेवताम् ॥ ५४ ॥
रजांसि पञ्चवर्णानि पञ्चद्रव्यात्मकानि च ।
पीतशुक्लारुणकृष्णश्यामान्येतानि भूतले ॥ ५५ ॥
हारिद्रं स्यात्तथा पीतं ताण्डुलं च सितं भवेत् ।
तथा दोपारजःक्षारसंयुक्तं रक्तमुच्यते ॥ ५६ ॥
कृष्णं दग्धपुलाकोत्थं श्यामं बिल्वफलादिजम् ।
सितेन रजसा कार्या सोमारेखा विपश्चिता ॥ ५७ ॥
अङ्गुलोत्सेधविस्तारा प्रशस्ता सर्वकर्मसु ।
पीता स्यात् कर्णिकाशुक्लपीतरक्ताश्च केसराः ॥ ५८ ॥
दलान्यब्जस्यान्तरालं श्यामचूर्णेन पूरयेद् ।
सित-रक्ता-सितै-र्वर्णै-र्वृत्तत्रय-मुदीरितम् ॥ ५९ ॥
नानावर्णा विचित्राः स्युश्चित्राकाराश्च वीथयः ।
द्वारशोभोपशोभाः स्युः सितरक्तनिशान्विताः ॥ ६० ॥
राशिचक्रावशिष्टानि कोणान्यन्यानि यानि वै ।
पीठपादानि तानि स्युरसितान्यरुणानि वा ॥ ६१ ॥
अरुणानि दलानि तथा सन्धिश्चाप्यसितरुग्भवति ।
असितारुणानि रजसा विहितानि बहुलानि कथयंत्यपरे ॥६२॥

इति श्रीगौतमीये महातन्त्रेऽष्टमोऽध्यायः ॥ ८ ॥

---

## अथ नवमोऽध्यायः

पञ्चगव्येन तद्देहं मण्डलं च विशोधयेत् ।
पलमात्रं दुग्धभागं गोमूत्रं तावदिष्यते ॥ १ ॥
घृतं च पलमात्रं स्याद् गोमयं तोलकद्वयम् ।
दधि प्रसृतिमात्रं स्यात् पञ्चगव्यमिति स्मृतम् ॥ २ ॥
अथवा पञ्चगव्यानां समानो भागं इष्यते ।
मूलमन्त्रेण संमन्त्र्य कुशाग्रेणैव शोधयेत् ॥ ३ ॥
तेन सर्वविशुद्धिः स्यात् सर्वपापनिकृन्तनम् ।
महान्ति पातकान्येव कृत्वा गव्यं पिबेद् यदि ॥ ४ ॥
नाशयेत् पानमात्रेण इत्यूचुर्वेदवादिनः ।
भूतशुद्धिं ततः कुर्याद् येन पूर्णं फलं लभेत ॥ ५ ॥
ॐ नमः सुदर्शनायेत्युक्त्वास्त्रेण प्रोक्ष्य देशिकः ।
तालत्रयं संविदध्यादूर्ध्वोर्ध्वं च समाहितः ॥ ६ ॥
दिग्बन्धं छोटिकाभिश्च दशभिः कारयेत् सुधीः ।
ततस्तेन जलानीतं तेजो रक्षत्विति स्मरेत् ॥ ७ ॥
विनिधाय करौ स्वांगे उत्तानोपरि चिन्तयेत् ।
हुंकारेण समुत्थाय शक्तिं स्वाधारसंस्थिताम् ॥ ८ ॥
मूलाधारमथ स्वाधिष्ठानं च मणिपूरकम् ।
अनाहतं विशद्धं च आज्ञाचक्रं विचिन्तयेत् ॥ ९ ॥
गुदे च ध्वजमूले च नाभौ हृदय एव च ।
कण्ठे तथा भ्रुवोर्मध्ये यथाक्रममनुस्मरेत् ॥ १० ॥
चिन्तयेत् पुनराधारं कनकाब्जं चतुर्दलम् ।
तन्मध्ये चिंतयेद्योनिं चन्द्रार्काग्निसमद्युतिम् ॥ ११ ॥
तन्मध्ये चिन्तयेन्मन्त्री जीवात्मानं समाहितः ।
जयाबन्धूकसदृशं तडित्कोटिसमप्रभम् ॥ १२ ॥
सूर्यकोटिप्रतीकाशं चन्द्रमःकोटिशीतलम् ।
प्रदीपकलिकाकार कुण्डलिन्या समं तथा ॥ १३ ॥
सुषुम्णावर्त्मना सोऽहमिति मन्त्रेण योजयेत् ।
सहस्रारे शिवे स्थाने परमात्मनि देशिकः ॥ १४ ॥
तत्रैव पञ्चभूतानि संहारक्रमतस्तथा ।

वाक्-पाणि-पायूपस्थं च वचनादानमेव च ॥ १५ ॥
गति-विसर्गानन्द-श्रोत्रत्वग्-दृग-रसनाः पुनः ।
नासा शब्दस्तथा स्पर्शो रूपं च रसगन्धकौ ॥ १६ ॥
तत्त्वानीति पञ्चविंशत्-पुरुषेण च योजयेत् ।
अहङ्कारं मनो बुद्धिं चित्तं तत्रैव योजयेत् ॥ १७ ॥
बीजभावेन लीनानि सर्वाणि परिचिन्तयेत् ।
धूम्रवर्णं ततो वायुबीजं षड्बिन्दुलाञ्छितम् ॥ १८ ॥
पूरयेदिडया वायुं सुधीः षोडशमात्रया ।
मात्रया च चतुःषष्ट्या कुम्भयेत्तं सुषुम्णया ॥ १९ ॥
द्वात्रिंशन्मात्रया मन्त्री रेचयेत् पिङ्गलाख्यया ।
पूरयेदनया चैव सच्छिन्स्यालीनमारुतम् ॥ २० ॥
रक्तवर्णं वह्निबीजं त्रिकोणं स्वस्तिकान्वितम् ।
तेन पूरकयोगेन मात्रया षोडशाख्यया ॥ २१ ॥
चतुःषष्ट्या मात्रया च निर्दहेत् कुम्भकेन च ।
वामपार्श्वस्थितं पापपुरुषं कज्जलप्रभम् ॥ २२ ॥
ब्रह्महत्याशिरःस्कन्धं स्वर्णस्तेयभुजद्वयम् ।
सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम् ॥ २३ ॥
तत्संसर्गि-पदद्वन्द्व-मंग-प्रत्यङ्गपातकम् ।
उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ॥ २४ ॥
खड्गचर्मधरं क्रूरं क्रुद्धं कुक्षौ विचिन्तयेत् ।
मूलाधारोत्थितेनैव वह्निना निर्दहेच्च तम् ॥ २५ ॥
एवं संदह्य परितो द्वात्रिंशन्मात्रया ततः ।
भस्मना सह तं मन्त्री रेचयेत् पिङ्गलाध्वना ॥ २६ ॥
वामनाड्या चन्द्रबीजं कुन्देन्दुयुतसप्रभम् ।
भालेन्दुबीजे संयोज्य ततः षोडशमात्रया ॥ २७ ॥
सुषुम्णया चतुःषष्टिमात्रया बीजमैन्दवम् ।
ध्यात्वाऽमृतमयीं वृष्टिं पञ्चाशद्वर्णरूपिणीम् ॥ २८ ॥
तया देहं विचिन्त्यैवं मनसा पिङ्गलाध्वना ।
द्वात्रिंशन्मात्रया मन्त्री लंबीजेन दृढं नयेत् ॥ २९ ॥
स्वस्थाने हंसमन्त्रेण पुनस्तेनैव वर्त्मना ।
जीवं तत्त्वानि चानीय स्वस्थाने स्थापयेत्ततः ॥ ३० ॥
इति कृत्वा भूतशुद्धिं मातृकान्यासमाचरेत् ।

गौतम उवाच—

भूतशुद्ध्या वद ब्रह्मन् कस्य शुद्धिः प्रजायते ॥ ३१ ॥

नात्मनः सर्वशुद्धीनां कारणं स तु कथ्यते ।
न जीवस्य ब्रह्मणा च सदैक्यं तस्य तत्त्वतः ।। ३२ ।।
न देहस्य ह्यनित्यस्य पूतता कस्य कथ्यते ।
मनसो नापि बुद्धेश्च कस्य स्याच्छुद्धिरीक्षणम् ।। ३३ ।।
इत्यादि संशयं छिन्धि त्वं हि ब्रह्मसमः सुतः ।

नारद उवाच—

शरीराकारभूतानां भूतानां यदि शोधनम् ।। ३४ ।।
अव्ययं ब्रह्मसंयोगाद् भूतशुद्धिरियं मता ।
अन्तःकरणमध्ये तु ज्योतिरात्मा प्रवर्त्तते ।। ३५ ।।
लिङ्गदेहं तु तं प्राहुर्योगिनस्तत्त्ववेदिनः ।
तस्य शोधनमात्रेण सर्वशुद्धिः प्रजायते ।। ३६ ।।
तदेव विश्वजनकं कारणं जन्मकर्मणाम् ।
तद्वियोगे भवेन्मुक्तिर्नान्यथा जन्मकोटिभिः ।। ३७ ।।
इत्येतत् कथितं सर्वं पुरुषार्थस्य निर्गमे ।
योगाभ्यासयोगेन मन्त्राभ्यासेन नाशयेत् ।। ३८ ।।
भूतशुद्धिं विधायेत्थं योग्यस्तु देशिको मतः ।
न्यासं देहस्य सन्नाहं विदध्यादनुपूर्वशः ।। ३९ ।।
ततः शुद्धिर्मातृका च केशवाद्यानथाचरेत् ।
विष्णुपञ्जरनामानमित्युक्तं क्रमसंग्रहम् ।। ४० ।।
अथार्घ्यस्थापनं कुर्याद् यथावदनुपूर्वशः ।
स्वस्याग्रे चतुरस्रं च मण्डलं परिचिन्तयेत् ।। ४१ ।।
पुष्पैरभ्यर्च्य तं मन्त्री तत्राधारं प्रतिष्ठयेत् ।
मंवह्निमण्डलाय नमो मन्त्रोऽयं तस्य चेष्यते ।। ४२ ।।
वृत्ताकारेण तत्रैव वह्नेर्दशकला यजेत् ।
धूम्रार्चिरूष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी ।। ४३ ।।
सुश्रीः स्वरूपा कपिला हव्यकव्यवहे अपि ।
वह्नेर्दशकलाः प्रोक्ता धर्ममूला हि तत्प्रदाः ।। ४४ ।।
शङ्खमत्राम्भसा प्रोदय स्थापयेत्तत्र मन्त्रवित् ।
अं अर्कमण्डलाय नम इत्येवं पूजयेत् सुसमाहितः ।।४५।।
वृत्ताकारेण तत्रैव कला द्वादश पूजयेत् ।
कंभंतपिन्यै इत्युक्त्वा स्वं स्वं तापनिकां तथा ।। ४६ ।।
गंपसुधायै मेधावी धूम्रां च परिपूजयेत् ।
घं पंमरीचिमभ्यर्च्य डंतंजज्वलिकां तथा ।। ४७ ।।

चं छं रुचिं समभ्यर्च्य सुषुम्णां पूजयेद् गुरुः ।
जं थं च भोगदां मन्त्री पूजयेत् कुसुमाक्षतैः ॥ ४८ ॥
झं तं विश्वासमभ्यर्च्य ञं णं च बोधिनीं न्यसेत् ।
टं ढं धारिणीं तद्वत् डं क्षमां च प्रपूजयेत् ॥ ४९ ॥
नमोऽन्तेनैव मन्त्रेण चतुर्थीप्रत्ययान्विता ।
एवं शंखं समभ्यर्च्य कलां सौरीं धनप्रदाम् ॥ ५० ॥
विलोममातृकां जप्त्वा स्वेष्टमन्त्रं यथा सुधीः ।
अतीर्थस्य जलेनैव पूरयेद्विमलेन च ॥ ५१ ॥
ॐ कारेणैव मन्त्रेण चन्द्रं तत्र प्रपूजयेत् ।
अमृता मानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः ॥ ५२ ॥
शशिनी चन्द्रिका ज्योतिस्तथा श्रीः प्रीतिरङ्गदा ।
पूर्णाऽपूर्णाऽमृता चेति कलाः षोडश कामदाः ॥ ५३ ॥
षोडशस्वरयोगेन नमोऽन्तेन प्रपूजयेत् ।
तत्राक्षतादिपुष्पाणि सदूर्वाणि विनिक्षिपेत् ॥ ५४ ॥
वामेनाच्छाद्य हस्तेन षडङ्गं दक्षहस्ततः ।
दशकृत्वो जपेन्मूलं मालिनीं शिखया न्यसेत् ॥ ५५ ॥
करौ प्रसार्य चान्योन्यं सम्पुटक्रमयोगतः ।
प्रयोज्य दक्षिणाङ्गुष्ठं तथा वामकनिष्ठया ॥ ५६ ॥
वामया दक्षिणाङ्गुष्ठं मुद्रेयं गालिनी मता ।
अर्घ्यस्य फलदा प्रोक्ता शङ्खस्योपरि चालिता ॥ ५७ ॥
गन्धादिभिः समभ्यर्च्य कृष्णाख्यं धाम योजयेत् ।
अस्त्रादिभिः सुसंरक्ष्य धेनुयोनिं प्रदर्शयेत् ॥ ५८ ॥
तद्दक्षिणे तु शङ्खं वा ताम्रवामार्तिकं तथा ।
पात्रमेकं निधायाथ तथा तोयेन पूरयेत् ॥ ५९ ॥
ताम्रपात्रं तु विप्रर्षे विष्णोरतिप्रियं मतम् ।
तथैव सर्वपात्राणां मुख्यं शंखं प्रकीर्तितम् ॥ ६० ॥
मृत्पात्रं च तथा प्रोक्तं स्वर्णं वा रजतं तथा ।
पद्मपात्रं हरेः शुद्धं नान्यत्तत्र नियोजयेत् ॥ ६१ ॥
मुख्यपात्रोद्धृतं तत्र किञ्चिदेव नियोजयेत् ।
तेनामृतेन सर्वत्र द्रव्यं मन्त्रमयं भवेत् ॥ ६२ ॥
ततो धर्मादिभिर्मन्त्री गात्रे पीठानि विन्यसेत् ।
गन्धाक्षतैः कुसुमकैः पवित्रैर्जलयोजितैः ॥ ६३ ॥
इति पीठं समभ्यर्च्य ध्यायेन्मन्त्रात्मदेवताम् ।

मूलादिब्रह्मरंध्रान्तं बिसतन्तुस्वरूपिणीम् ॥ ६४ ॥
कुण्डलीं त्रिविधां तत्र तथा बीजाक्षरं त्रिधा ।
तुरीयां कुण्डलीं मूर्ध्नि वासुदेवं तुरीयकम् ॥ ६५ ॥
लकारं मूलदेशे च द्रवत्स्वर्णनिभं स्मरेत् ।
मूलादिहृदयं यावद्वह्निकुण्डलिनीं तथा ॥ ६६ ॥
हृदये कामबीजं च सूर्यायुतसमप्रभम् ।
सूर्यकुण्डलिनीं तत्र सूर्यकोटिसमप्रभाम् ॥ ६७ ॥
हृदयाद् गलपर्यन्तं ध्यायेदनाकुलः सुधीः ।
भ्रूमध्याद् ब्रह्मरन्ध्रान्तं मायामिन्दुयुतप्रभाम् ॥ ६८ ॥
चन्द्रकुण्डलिनीं तद्वत् स्रवदमृतविग्रहाम् ।
बिन्दुनादमयं वासुदेवं बिन्दौ तुरीयकम् ॥ ६९ ॥
देशकालाद्यवच्छिन्नं सर्वतेजोमयं स्मरेत् ।
तुर्यकुण्डलिनीं तद्वत् केवलज्ञानविग्रहाम् ॥ ७० ॥
एवं ध्यात्वा पुनर्बीजं सम्पूर्णं मनसा स्मरेत् ।
चिदानन्दमयं स्वच्छमेकात्मकतया गुरुः ॥ ७१ ॥
सुधावृष्टिं निपात्याथ तर्पयेत् परदेवताम् ।
ध्यात्वा ध्यात्वा पुनर्ध्यात्वा सहजानन्दविग्रहम् ॥ ७२ ॥
बिन्दुस्रुतसुधाभिस्तु तर्पयेच्च पुनः पुनः ।
अन्तर्याग इति प्रोक्तो जीवतो मुक्तिदायकः ॥ ७३ ॥
मुनीनां च मुमुक्षूणामधिकारोऽत्र केवलम् ।
अथवा मानसैर्द्रव्यैः प्रकटैश्चापि संयजेत् ॥ ७४ ॥
ध्यात्वा हृत्पद्ममध्ये तु वासुदेवं यथोदितम् ।
स्वागताद्यैरुपचारैरित्याद्यैः स्नानभूषणैः ॥ ७५ ॥
गंधपुष्पधूपदीपनैवेद्यविधिना तथा ।
पुष्पांजलिं ततो दद्याद् बहुमानान्निवेदयेत् ॥ ७६ ॥
अथावाह्य च संभूतैः प्रकटैरर्चयेद् विभुम् ।
स्वागताद्यैर्निवेद्यान्त्र आत्माभेदेन पूजयेत् ॥ ७७ ॥
चन्दनागुरुनिःस्यन्दचर्चितांगः स्वयं गुरुः ।
विष्णुपञ्जरमंत्रेण तत्तत्स्थानविधानवित् ॥ ७८ ॥
रचयेत्तिलकं भक्त्या प्रदीपकलिकानिभम् ।
पुष्पांजलिं पञ्चकृत्वो विधिवत्तनुयाद् गुरुः ॥ ७९ ॥
तुलसीयुगलं पादद्वये दक्षिणवामके ।
हयारियुगलं पार्श्वद्वये गंधद्वयान्वितम् ॥ ८० ॥

पद्मयुग्मं मूर्ध्नि देशे मूलेन दक्षवामके।
पङ्क्तिभिः सर्वतनौ न्यस्येत् पुनः सर्वैश्च सर्वतः॥ ८१॥
एवं :पंचाञ्जलिः प्रोक्तो हरिसान्निध्यकारकः।
श्रीखंडं दक्षिणे दद्यात् सितपुष्पेण संयुतम्॥ ८२॥
वामे तु चन्दनं दद्यात् तथा रक्तेन संयुतम्।
सर्वपुष्पाञ्जलिं दद्यात् सर्वगन्धमनन्यधीः॥ ८३॥
दक्षिणे वासुदेवाख्यं स्वच्छं चैतन्यमव्ययम्।
वामे च रुक्मिणी नित्या रक्ता रजोगुणान्विता॥ ८४॥
तेन सत्त्वरजोरूपं स्वात्मानं चिन्तयेद् गुरुः।
मूलमन्त्रं जपेद् बुद्ध्या सुषुम्णामूलदेशके॥ ८५॥
मन्त्रार्थं तस्य चैतन्यबीजं ध्यात्वा पुनः पुनः।
उदयादिलयान्तं च मन्त्रमेव समभ्यसेत्॥ ८६॥
उदयः शब्दरूपश्च लयश्चार्थः प्रकीर्तितः।
ज्ञातृज्ञानविभागेन तन्मयो भव गौतम!॥ ८७॥
मनःसंहरणं शौचं मौनं मन्त्रार्थचिंतनम्।
अव्यग्रत्वमनिर्वेदो जपसंपत्तिहेतवः॥ ८८॥
एवं ते कथितं सम्यक् त्रिविधं यजनक्रमम्।
यान् कृत्वा संप्रदानेन मन्त्री वांछितमश्नुते॥ ८९॥
अथ मण्डलमध्ये तु पूजनं बाह्यगोचरम्।
आरभेत् प्रकटैर्द्रव्यैर्नानारससुविस्तरैः॥ ९०॥
पाद्यार्घ्याचमनीयानि पात्राणि च स्वदक्षिणे।
संस्थाप्य चापि तद्द्रव्यैः पूरितानि च देशिकः॥ ९१॥
अर्घ्यस्य त्रीणि पात्राणि पाद्यस्यापि त्रयं भवेत्।
तथैवाचमनीयानि पात्राणि च विभागशः॥ ९२॥
तथाकरणदौर्बल्यादेकमेकं प्रशस्यते।
पूरयेद् विधिना मंत्री मण्डलं शुभ्रतंडुलैः॥ ९३॥
शुद्धैरेवाक्षतैः सम्यग् यावत्पंकजमण्डलम्।
कुशान् विस्तार्य्य तत्रैव पंकजं विष्टरान्वितम्॥ ९४॥
पुष्पाणि च विकीर्याथ कुम्भस्थापनमाचरेत्।
हैमं रौप्यं ताम्रमयं मार्त्तिकं वा स्वशक्तितः॥ ९५॥
वित्तशाठ्यं न कुर्वीत कृतेऽनिष्टमवाप्नुयात्।
द्वात्रिंशदङ्गुलं कुम्भं विस्तारान्नतिशालिनम्॥ ९६॥
षोडशद्वादशाङ्गुलमतो न्यूनं न कारयेत्।

पुण्यस्त्रीनिर्मितैः सूत्रैर्विधिवत् त्रिगुणीकृतैः ॥ ९७ ॥
तेन संवेष्ट्य परितो यथा न क्षरते क्वचित् ।
भग्ने मृत्युः साधकस्य क्षरणे चापदां पदम् ॥ ९८ ॥
तस्माद्दोषं परिज्ञाय कुर्यात् सर्वमतन्द्रितः ।
प्रक्षाल्यान्तरमन्त्रेण मन्त्रैः परिमलान्वितम् ॥ ९९ ॥
वेदविद्भिर्द्विजैः सार्द्धं स्थापयेत्तारमुच्चरन् ।
दुग्धवृक्षत्वचां तोयैरथ चाप्यक्षरौषधैः ॥१००॥
विष्णुं गन्धाक्षतैर्वाथ तीर्थादेवाथ पूजयेत् ।
चन्दनागुरु-ह्रीबेर-कुष्ठ-कुंकुम-रोचनाः ॥१०१॥
जटामांसीत्युशीरं च विष्णोर्गन्धाष्टकं स्मृतम् ।
गन्धाष्टकमिदं ह्रद्यं विष्णोः सान्निध्यकारकम् ॥१०२॥
वह्निरूपमथाधारं कलाभिः सह पूजयेत् ।
तथा सूर्यमयं कुम्भं तत्कलाभिः प्रपूजयेत् ॥१०३॥
जलं सोममयं तद्वत् कलाभिश्च समर्चयेत् ।
तेजस्त्रयमिदं प्रोक्तं जलं तदात्मकं स्मृतम् ॥१०४॥
विलोममातृकावर्णैः सर्वत्र पूरणं स्मृतम् ।
तथा मूलं समुच्चार्य पूरयेद् विगता स्मयः ॥१०५॥
तीर्थमंत्रेण तीर्थानि योजयेत् सूर्यमण्डलात् ।
बृहच्छंखं समुत्थाप्य स्वपुरोभागमग्रतः ॥१०६॥
तत्राधारं प्रतिष्ठाप्य पूरयेद् वह्निमण्डलम् ।
ततः शङ्खं प्रतिष्ठाप्य सूर्यात्मकमथार्चयेत् ॥१०७॥
प्रदक्षिणक्रमेणैव कलाः सर्वत्र पूजयेत् ।
विलोममातृकां जप्त्वा तथा मन्त्रं प्रपूजयेत् ॥१०८॥
काथोदकैर्वा दुग्धैर्वा पूर्वोक्तैर्वा प्रपूजयेत् ।
तेजस्त्रय-कलाः पूज्याः प्राणस्थापनपूर्वकम् ॥१०९॥
आवाहनादिकं कृत्वा कला एकैकशः क्रमात् ।
सम्पूज्य विधिवद् विद्वान् देवसान्निध्यहेतवे ॥११०॥
प्रणवांशोद्भवाः सम्यक् कलास्तत्र प्रपूजयेत् ।
स्थापनान्तेषु संयोज्य गंधपुष्पादिभिर्यजेत् ॥१११॥
एकैकमृक्पठन्नन्यद् तत्र तज्जलं क्षिपेत् ।
पाथस्तेजोमयं तत्र योजयेद् गुरुसत्तमः ॥११२॥
प्रथमं प्रकृतेर्हंसः प्रतद्विष्णुरनंतरम् ।
अंबकं च तृतीये स्यात्तद्विप्रायश्चतुर्थकम् ॥११३॥

विष्णुर्योनिं कल्पयितुं पंचमं परिकीर्त्तितम् ।
ऋक्पंचकमिदं प्रोक्तं प्रणवार्णस्वरूपकम् ॥११४॥
स्वरस्य पंचभेदेभ्यः पंचाशद्वर्णकाः कलाः ।
सृष्टी ऋद्धिः स्मृतिर्मेधा कान्तिर्लक्ष्मीर्द्युतिः स्थिरा ॥११५॥
स्थितिः सिद्धिरिति प्रोक्ता कचवर्गगताः क्रमात् ।
अकाराद् ब्रह्मणोत्पन्नास्तप्तचामीकरप्रभाः ॥११६॥
एताः करधृताक्ष-स्रक्पंकजद्वयकुण्डिकाः ।
जरा कपालिनी शांतिरीश्वरी रतिकामिका ॥११७॥
वरदा ह्लादिनी प्रीतिर्दीर्घा स्युष्टुतवर्गगाः ।
उकारात् विष्णुनोत्पन्नास्तमालदलसन्निभाः ॥११८॥
अभीतिदरचक्रेष्टबाहवः परिकीर्तिताः ।
तीक्ष्णा रौद्री भया निद्रा तंद्री क्षुत् क्रोधिनी क्रिया ॥११९॥
उत्कारी मृत्युरेताः स्युः कथिताः पर्यवर्गजाः ।
रुद्रेण मार्णादुत्पन्नाः शरच्चन्द्रनिभाः प्रभाः ॥१२०॥
उद्वहन्त्योऽभयं शूलं कपालं बाहुभिर्वरम् ।
ईश्वरेणोदिता बिन्दोः पीता श्वेताऽरुणा सिता ॥१२१॥
अनंता च पवर्गस्था जवाकुसुमसन्निभाः ।
अभयं हरिणं टंकं दधाना बाहुभिर्वरम् ॥१२२॥
निवृत्तिः सप्रतिष्ठा स्याद्विद्या शान्तिरनंतरम् ।
इंधिका दीपिका चैव रेचिका मोचिका परा ॥१२३॥
सूक्ष्मामृता तथा ज्ञानामृता याप्यायनी तथा ।
व्यापिनी व्योमरूपाः स्युरनंताः स्वरशक्तयः ॥१२४॥
सदाशिवेन संज्ञाता नादादेताः सितत्विषः ।
अक्ष-स्रजा-पुष्पगुणकपालवरतर्जनी ॥१२५॥
तत्तत्कलाः समायाद्य कृत्वा प्राणस्य संयमम् ।
संपूज्य गंधपुष्पाद्यैस्तस्यान्ते जलमर्पयेत् ॥१२६॥
कुंभतेजस्त्रयकला अष्टत्रिंशज्जपस्ततः ।
जपेत् कलाश्च पंचाशत् प्रणवांशसमुद्भवाः ॥१२७॥
पुनः पंचकृत्वो जपान्मूलमंत्रं जपेत्ततः ।
चतुर्णवतिमन्त्रोयं देवसान्निध्यकारकः ॥१२८॥
नवरत्नं तद्वदेव निक्षिपेन्मातृकां जपन् ।
नववर्गमयी चाधो नवरत्नं तदात्मकम् ॥१२९॥
वज्रमौक्तिकपुष्पाद्यविद्रुमं पद्मरागकम् ।

वह्निनीलं मरकतं माणिक्यं स्वर्णमेव च ॥१३०॥
नवरत्नमिति प्रोक्तं सर्वदेवाश्रयं महत् ।
स्थापयेत् तन्मुखे मंत्री चषकं फलसंयुतम् ॥१३१॥
विष्टरं तन्मुखे दत्त्वा दत्त्वा च पंचपल्लवम् ।
शुद्धेन क्षौमयुग्मेन निर्मलेनांशुकेन वा ॥१३२॥
वेष्टयेद्विधिना मंत्री सर्वाश्रयं यथा भवेत् ।
वहुमालां ततो दद्याद् गन्धं च सुमनोहरम् ॥१३३॥
हरिमावाहयेत् तत्र छायायां कल्पशाखिनः ॥१३४॥

इति श्रीगौतमीये महातन्त्रे नवमोऽध्यायः ॥ ६ ॥

## अथ दशमोऽध्यायः

अथ पुष्पांजलिकरः समादाय नभस्वतः ।
हृत्पद्मसंस्थितं तेजः कुण्डलिन्या सह मेलयेत् ॥ १ ॥
चिदानन्दमयं शुद्ध सर्वतेजोमयं स्मरन् ।
षट्चक्रभेदनेनैवोन्मिलिन्या सह योजयेत् ॥ २ ॥
जीवानन्दमयं तत्तु प्राप्तमैश्वर्यमद्भुतम् ।
आराध्य मानसैर्द्रव्यैर्वहन्नासापुटक्रमात् ॥ ३ ॥
करस्थमातृकाम्भोजे चैतन्यं योजयेत्ततः ।
कुम्भमध्ये मन्त्रमूर्त्तावावाह्य परिपूजयेत् ॥ ४ ॥
कृष्ण कृष्ण महायोगिन् सर्वसत्त्वहृदि स्थित ।
सर्वत्र सर्वग ब्रह्मन् कृपया सन्निधौ भव ॥ ५ ॥
मंत्रेणानेन संस्थाप्य तत्तन्मुद्राः प्रदर्शयेत् ।
ऊर्ध्वाञ्जलिमधः कुर्यादियमावाहनी भवेत् ॥ ६ ॥
सेयं तु विपरीता स्यान्मुद्रास्थापनकर्मणि ।
बाह्वङ्गुष्ठद्वये मुष्टिमुद्रा स्यात् सन्निधापनी ॥ ७ ॥
अंगुष्ठगर्भिणी सैव मुद्रा स्यात् सन्निरोधिनी ।
अन्योऽन्यतर्जनीयुग्मभ्रमणादवगुंठनी ॥ ८ ॥
आवाह्य पंचमुद्राभिः प्राणास्थापनमाचरेत् ।
पाशांकुशपुटाशक्तिस्ततो हंसमनुं वदेत् ॥ ९ ॥
कृष्णस्य प्राणा इह प्राणाः कृष्णस्य जीव इह स्थितः ।
तस्य सर्वेन्द्रियाणि च वाङ्मनश्चक्षुरित्यथ ॥ १० ॥
इहागत्य सुखं चिरं तिष्ठन्तु स्वाहया युतः ।
अयं प्राणमनुः प्रोक्तः सर्वजीवप्रदायकः ॥ ११ ॥
अनेन तु विहीना ये निर्जीवा मानवा मताः ।
रहस्यं चास्य गुरुतस्तन्त्रतो ज्ञानवैभवात् ॥ १२ ॥
किं न सिद्ध्यति विप्रर्षे देशिकस्य न चान्यथा ।
मातृकां केशवाख्यां च तत्त्वसन्न्यसनेन वै ॥ १३ ॥
करांगदशतत्त्वानां न्यसनात् सन्निधिर्भवेत् ।
सर्वात्मा सर्वगो देवो मण्डलादधितिष्ठितः ॥ १४ ॥
शालग्रामे मणौ यन्त्रे मण्डले प्रतिमासु च ।

नित्यं पूजा हरेः कार्य्या नतु केवलभूतले ॥ १५ ॥
गंडक्याश्चैव देशे च शालग्रामस्थलं महत् ।
पाषाणं तद्भवं यत्तच्-शालग्राममिति स्मृतम् ॥ १६ ॥
शालग्रामशिलास्पर्शात् कोटिजन्माघनाशनम् ।
किं पुनर्यजनं तत्र हरिसान्निध्यकारकम् ॥ १७ ॥
शालग्रामैकयजनाच्छतलिंगफलं लभेत् ।
बहुभिर्जन्मभिः पुण्यैर्यदि कृष्णशिलां लभेत् ॥ १८ ॥
गोष्पदेन च चिह्नेन जन्तुः स्तेन समाप्यते ।
कामक्रोधादिदोषोत्थसर्वदुःखनियन्त्रणात् ॥ १९ ॥
चक्रमित्याहुरेतस्मिन् देवः प्रीणाति पूजितः ।
पद्ममष्टपलाशं च चतुरस्त्रं सुलक्षणम् ॥ २० ॥
चतुर्द्वारसमायुक्तं .कामगर्भितकर्णिकम् ।
सामान्यमंत्रमुद्दिष्टमष्टादशाक्षरं शृणु ॥ २१ ॥
चतुरस्त्रं चतुर्द्वारं पद्ममष्टदलान्वितम् ।
षट्कोणमध्ये कामाख्यं सप्तदशार्णवेष्टितम् ॥ २२ ॥
षडक्षरं मनुवरं षट्कोणे विलिखेत्ततः ।
तद् यन्त्रं महाभाग कृपया कथितं तव ॥ २३ ॥
अस्य विज्ञानमात्रेण कृष्णात्मा साधको भवेत् ।
अखण्डमण्डलाकारं व्याप्य विश्वं विजृम्भते ॥ २४ ॥
सर्ववेदमयं येन तेन मण्डलमुच्यते ।
प्रतिमां कृष्णदेवस्य यत्नतः कारयेत् सुधीः ॥ २५ ॥
शिल्पिना कृष्णभक्तेन विश्वकर्मोक्तजानता ।
दशपंचाङ्गुला मुख्या मध्यमा द्वादशांगुला ॥ २६ ॥
अष्टांगुलाऽधमा सा तु न्यूनाधिक्यं न कारयेत् ।
अज्ञानेनापि मोहेन यदि कुर्य्यान्नराधमः ॥ २७ ॥
प्रतिष्ठा विफला तस्य पूजनान्न फलं लभेत् ।
मानाङ्गुलविहीना या प्रतिमा यत्र तिष्ठति ॥ २८ ॥
राजानं पीडयत्येव गृहस्थो नरकं व्रजेत् ।
मानांगुलेन सा कार्या नान्यथा मुनिसत्तम ॥ २९ ॥
काश्मरी ज्ञानदा प्रोक्ता स्वर्णदापि च मुक्तिदा ।
संपत्तिदा शिलाजा तु राजती बहुमुक्तिदा ॥ ३० ॥
तेजोदा दारुजा या च रैतिकी शत्रुनाशिनी ।
ताम्री धर्मविवृद्धिं च करोति बहुसौख्यदा ॥ ३१ ॥

मृदैव मृन्मयी प्रोक्ता प्रतिमा शुभलक्षणा।
भोगदा मोक्षदा सा तु प्रतिमा कथिता तथा॥ ३२॥
लेप्या लेख्या द्विधा चापि प्रतिमा परिकीर्त्तिता।
पर्वताग्रे नदीतीरे चत्वरे गोष्ठभूमिषु॥ ३३॥
समुद्रकूलेऽरण्ये वा मानहीनाश्च दूषणम्।
कृष्णप्रतिकृतिं कुर्याद् दिव्यां वंशसुचिह्निताम्॥ ३४॥
तां तु संस्थापयेन्मन्त्री गृहे वा गोष्ठमध्यतः।
समाहितस्ततो मन्त्री पूजयेदुपचारकैः॥ ३५॥
शोडशोपचारमन्त्रेण यज्ञनाख्येन सिद्धये।
यस्य दर्शनमिच्छन्ति देवा ब्रह्मशिवादयः॥ ३६॥
कृपया देवदेवेश ! मदग्रे सन्निधौ भव।
तस्य ते परमेशान ! स्वागतं स्वागतं भवेत्॥ ३७॥
कृतार्थोऽस्म्यनुगृहीतोऽस्मि सफलं जीवितं तु मे।
यदागतोऽसि देवेश चिदानन्दमयाव्यय॥ ३८॥
अज्ञानाद्वा प्रमादाद्वा वैकल्यात् साधनस्य च।
यदपूर्णं भवेत् कृत्यं कृपयाप्यभिमुखो भव॥ ३९॥
पाद्यं श्यामार्कदूर्वाब्जविष्णुकान्ताद्भिरिष्यते।
त्वद्भक्तिलेशसंपर्कात परमानन्दसंप्लवः॥ ४०॥
तस्य ते परमेशान पाद्यं शुद्धं प्रकल्प्यते।
जातीलवङ्गकक्कोलैर्दद्यादाचमनीयकम्॥ ४१॥
स्वधामंत्रेण मतिमान् स्मृत्वा वैदक्षिणं करम्।
वेदानामपि वेदाय देवानां देवतात्मने॥ ४२॥
आचमनं कल्पयामीश स्वधायाः शुद्धिहेतवे।
गंधपुष्पाक्षतयवकुशाग्रतिलसर्पपान्॥ ४३॥
दूर्वाभिर्देवशिरसि शिरोमन्त्रेण चार्पयेत्।
एतदर्घ्यमिदं प्रोक्तं तुष्टये शार्ङ्गधन्वनः॥ ४४॥
तापत्रयहरं दिव्यं परमानन्दलक्षणम्।
तापत्रयविमोक्षाय तवार्घ्यं कल्पयाम्यहम्॥ ४५॥
घृतमधुदधिभिस्तै मधुपर्कं स्वपाम्बुना।
सर्वकालुष्यहीनाय परिपूर्णसुधात्मकम्॥ ४६॥
मधुपर्कमिदं देव कल्पयामि प्रसीद मे।
मुखे चाचमनं दद्यात केवलेन जलेन च॥ ४७॥

उच्छिष्टोऽप्यशुचिर्वापि यस्य स्मरणमात्रतः ।
शुद्धिमाप्नोति तस्मै ते पुनराचमनं त्विदम् ॥ ४८ ॥
चन्द्रचन्दनकाश्मीरजलैः स्नानं विधीयते ।
परमानन्दबोधाब्धिनिमग्ननिजमूर्तये ॥ ४९ ॥
सांगोपाङ्गमिदं स्नानं कल्पयाम्यहमीश ते ।
पीताम्बरयुगं दद्याद् यथाशक्त्या परिष्कृतम् ॥ ५० ॥
मायाचित्र तेन यज्जन्मनिगूढनिजतेजसे ।
निरावरणविज्ञानवासस्ते कल्पयाम्यहम् ॥ ५१ ॥
उत्तरीयं ततो दद्याद्वासोऽर्द्धनियमान्वितम् ।
यमाश्रित्य महामाया जगत्संमोहिनी सदा ॥ ५२ ॥
तस्मै ते परमेशाय कल्पयाम्युत्तरीयकम् ।
यज्ञसूत्रं ततो दद्यादथवा स्वर्णनिर्मितम् ॥ ५३ ॥
यस्य शक्तित्रयेणेदं संप्रोक्तमखिलं जगत् ।
यज्ञसूत्राय तस्मै ते यज्ञसूत्रं प्रकल्पयेत् ॥ ५४ ॥
हाराद्याभरणं दद्यात् सुवर्णाश्मसमन्वितम् ।
स्वभावसुन्दरांगाय सत्यसत्याश्रयाय ते ॥ ५५ ॥
भूषणानि विचित्राणि कल्पयाम्यमरार्चितम् ।
अर्घोत्थितं जलं दद्यादुपचारान्तरांगके ॥ ५६ ॥
समस्तदेवदेवेश सर्वतृप्तिकरं परम् ।
अखंडानन्दसम्पूर्णं गृहाण जलमुत्तमम् ॥ ५७ ॥
चन्दनागुरुकर्पूरमिश्रगन्ध इहोच्यते ।
सर्वांगं लेपयेत्तेन तापत्रयोपशान्तये ॥ ५८ ॥
परमानन्दसौभाग्य-पूरापूर्णदिगन्तरम् ।
गृहाण परमं गन्धं कृपया परमेश्वर ॥ ५९ ॥
पञ्चपुष्पाञ्जलीन् दद्यात् पूर्वोक्तेनैव वर्त्मना ।
अन्यान्यपि च योग्यानि पुष्पाणि वैष्णवे मनौ ॥ ६० ॥
कमले करवीरे द्वे तुलसी जातिकेतकी ।
कह्लारचम्पकोत्पल-कुन्द-मन्दार-नागकेसरसेवती ॥ ६१ ॥
नन्द्यावर्तं तु मल्लिका यूथी नवमालिका च सौगन्धि च कोरकम् ।
कोरटाशोक-सर्ज-बिल्वार्जुनमुनिपत्रकम् ॥ ६२ ॥
पत्रं चामलकं शुद्धं कर्णिकारं तथा शुभम् ।
पलाशादियथालाभं गोविन्दाय समर्पयेत् ॥ ६३ ॥

मलिनं भूमिसंस्पृष्टं कृमिकेशादिदूषितम् ।
पर्युषितानि पुष्पाणि वर्जयेद्देवतार्चने ॥ ६४ ॥
तिष्ठेद्दिनत्रयं शुद्धं पद्ममामलकं तथा ।
तुलसी सर्वदा शुद्धा तथा बिल्वदलानि च ॥ ६५ ॥
दिनैकं करवीराणि योग्यानि च तपोधन ।
तुरीयं गुणसम्पन्नं नानागुणमनोहरम् ॥ ६६ ॥
आनन्दसौरभं पुष्पं गृह्यतामिदमुत्तमम् ।
मन्त्रसंपुटितान्न्यस्येन्मातृकां देवकर्मणि ॥ ६७ ॥
तत्त्वन्यासस्थले तांस्तान् गंधपुष्पाक्षतैर्यजेत् ।
पंचात्मिकायां दीक्षायां गणेशादिक्रमाद्यजेत् ॥ ६८ ॥
यदा मध्ये तु गोविन्दं नैर्ऋत्यां हंसमर्चयेत् ।
आग्नेय्याङ्गणमभ्यर्च्य ऐशान्यां शिवमर्चयेत् ॥ ६९ ॥
वायव्यामर्चयेद्देवीं भोगमोक्षफलाप्तये ।
गन्धादिभिरथाभ्यर्च्य षडङ्गं स्यादनन्तरम् ॥ ७० ॥
शक्तौ ततोऽस्मि सर्वमन्यथा केवलं यजेत् ।
विंशकृत्वो जपेन्मन्त्रं नमस्कृत्य क्षमापयेत् ॥ ७१ ॥
तत्पदंगे षडङ्गानि वक्ष्यमाणेन वा जपेत् ।
आग्नेय्यां शिवकोणे च राक्षसे वायुकोणके ॥ ७२ ॥
मध्ये दिक्षु च पूर्वादि अंगषट्कं समर्चयेत् ।
हारस्फटिककलायाञ्जनमुक्तावह्निरोचिषोज्ज्वलाः ॥ ७३ ॥
अभयवरोद्यतहस्ताः प्रधानतयाऽङ्गदेवताः कथिताः ।
एवमभ्यर्च्य मतिमान् देहेन भेदतो यजेत् ॥ ७४ ॥
मुखस्थं वेणुसंज्ञं यत् पूजयेत् सुसमाहितः ।
वेणवे नम इत्यस्य मंत्रोऽयं समुदीरितः ॥ ७५ ॥
कौस्तुभं हृदये रत्नं सूर्यायुतसमप्रभम् ।
कौस्तुभाय नम इत्येवं तस्य मन्त्र उदीरितः ॥ ७६ ॥
तदधो वनमालां च चन्द्रायुतसमप्रभाम् ।
प्रणवं पूर्वमुच्चार्य वनमालायै नमो वदेत् ॥ ७७ ॥
वनमालामनुः प्रोक्तः सर्वपापौघनाशनः ।
कौस्तुभं ध्वं श्रीवत्साख्यं चन्द्रायुतसमप्रभम् ॥ ७८ ॥
सूर्यायुतसमाभाय किरीटाय नमो वदेत् ।
श्रीवत्साय नम इत्युक्तो मनुस्तस्य महर्षिभिः ॥ ७९ ॥

सहस्रसूर्यसंकाशे यजेन्मकरकुण्डले।
मकरकुंडलाभ्यां नम इत्यस्य मनुरीरितः॥ ८० ॥
किरीटं मस्तके द्युमत्सूर्यायुतसमप्रभम्।
सूर्यायुतसमाभाय किरीटाय नमो वदेत्॥ ८१ ॥
प्रणवादिरयं प्रोक्तः किरीटस्य महर्षिभिः।
पूर्वादिदिक्समारभ्य प्रदक्षिणक्रमाद्यजेत्॥ ८२ ॥
दामसुदामवसुदामकिंकिणीगन्धपुष्पकैः।
अन्तःकरणरूपास्ते कृष्णस्य परिकीर्त्तिताः॥ ८३ ॥
आत्माभेदेन ते पूज्या यथा कृष्णस्तथैव च।
प्रणवादिनमोऽन्तैश्च मन्त्रैस्तान् परिपूजयेत्॥ ८४ ॥
लयांगमुक्तं देवस्य भोगांगं शृणु गौतम।
अष्टौ महिष्यो देवस्य पूर्वाऽदिषु प्रपूजयेत्॥ ८५ ॥
प्रदक्षिणक्रमेणैव रुक्मिण्याद्यास्तु ता मताः।
रुक्मिणी सत्यभामा च सुशीला च सुलक्ष्मणा॥ ८६ ॥
कालिन्दी ऋक्षजा नाम्रजित्याख्या च सुनन्दका।
द्रुतहेमसमप्रख्या रुक्मिणी रूढयौवना॥ ८७ ॥
सितवस्त्रपरीधाना सर्वाभरणभूषिता।
देवस्य वदनाम्भोजमिलिताक्षिमधुव्रता॥ ८८ ॥
वराभयकरोपेता भुक्तये मुक्तये सताम्।
इयं लक्ष्मीः परा शक्तिर्विश्वानुग्रहरूपिणी॥ ८९ ॥
कलायकुसुमश्यामा सर्वाभरणभूषिता।
पीताम्बरा बृहच्छ्रोणिः सत्याख्या धरणिः स्मृता॥ ९० ॥
रत्ननूपुरशोभाढ्या या दक्षिणे वरप्रदा।
अन्याश्च गौरश्यामाभाः क्रमेण परिकीर्तिताः॥ ९१ ॥
वराभयकरोद्युक्ता चित्राभरणशोभना।
सितवस्त्रयुगाढ्या च सर्वेप्सितफलप्रदा॥ ९२ ॥
यशोदा हेमसङ्काशा सितवस्त्रयुगान्विता।
सर्वाभरणसंदीप्ता कुण्डलोल्लासिताननना॥ ९३ ॥
रोहिणी च यजेत् तथा नन्दं गौरं समर्चयेत्।
वरदाभयसंयुक्तं समस्तपुरुषार्थदम्॥ ९४ ॥
बलदेवं चापि तथा पूजयेत् कुन्दसन्निभम्।
हेलालोलकुण्डलिनं हेलायन्तं स्मरेत् तथा॥ ९५ ॥

ततो यजेत् सुभद्रां च श्यामलां रूढयौवनाम् ।
तद्बहिर्वृष्णयः सर्वे गोपानपि समर्चयेत् ॥ ९६ ॥
इन्द्रनीलमुकुन्दाद्याँस्तद्बहिः परिपूजयेत् ।
इन्द्रनीलं मुकुन्दं च तथा चानन्दकच्छपौ ॥ ९७ ॥
पुष्करं शंखपद्मौ च निधयोऽष्टौ प्रकीर्तिताः ।
तद्बहिः कल्पवृक्षांश्च इन्द्रादींस्तद्बहिर्यजेत् ॥ ९८ ॥
इन्द्रमैरावतारूढं श्यामं वज्रधरं तथा ।
साधिपं सपरीवारं तद्दिशि परिपूजयेत् ॥ ९९ ॥
अग्निं हेमसमाभासं शक्तितोमरधारिणम् ।
मेषारूढं शक्तियुक्तं तेजसांपतिमर्चयेत् ॥ १०० ॥
दक्षिणे पितृदेवं च महिषोपरि संस्थितम् ।
यजेद् दण्डधरं चैव यमं पित्रधिदैवतम् ॥ १०१ ॥
राक्षसाधिपतिं तद्वन्नैर्ऋत्यां खड्गधारिणम् ।
तुरगावस्थितं देवं परिवारैः समर्चयेत् ॥ १०२ ॥
पश्चिमे वरुणं शुक्लं मकरारूढमुज्ज्वलम् ।
अपांपतिं पाशधरं परिवारैः सहार्चयेत् ॥ १०३ ॥
वायव्यां वायुदेवं च प्राणाधिपसमाह्वयम् ।
दक्षःस्तांकुशमेणवाहनं परिपूजयेत् ॥ १०४ ॥
शरदिन्दुसमाभासं कृपया शशलांछनम् ।
सोमं सौम्यदिशाधीशं नरारूढं समर्चयेत् ॥ १०५ ॥
ईशानं वृषभारूढं चन्द्रायुतसमप्रभम् ।
रुद्राधिपं शूलहस्तं गन्धमुख्यैः प्रपूजयेत् ॥ १०६ ॥
इन्द्रेशानमध्यदेशे ब्रह्माणं हंसवाहनम् ।
हेमगौरं चतुर्वक्त्रं पद्महस्तं प्रपूजयेत् ॥ १०७ ॥
रक्षोवरुणयोर्मध्ये विष्णुं चक्रधरं यजेत् ।
नागाधिपं सुपर्णस्थं विष्णोः पारिषदान्यजेत् ॥ १०८ ॥
वज्रादीनायुधान् भद्रान् तेषां च बहिरर्चयेत् ।
यथा सिन्धुसमुद्भूतास्तरङ्गा भिन्नतां ययुः ॥ १०९ ॥
तथा कृष्णसमुद्भूता एते तस्यात्मतां ययुः ।
तस्य ध्यानेन ते ध्येयाः साधकेन शुभंयुना ॥ ११० ॥
एवं सप्तवृत्तिमयं देशिकः कृष्णमर्चयेत् ।
धर्मार्थकाममोक्षाश्च करे तस्य सुनिश्चिताः ॥ १११ ॥

अथवा तदङ्गपतिभिस्तदङ्गैरपि चार्चयेत् ।
एवं चाप्यर्चयन् कृष्णं कामभुक्त्योः स भाजनम् ॥ ११२ ॥
य एतद्यजनाशक्तः कृष्णाष्टकेन पूजयेत् ।
श्रीकृष्णो वासुदेवश्च नारायणसमाह्वयः ॥ ११३ ॥
देवकीनन्दनो यदुश्रेष्ठो वार्ष्णेयस्तदनंतरम् ।
असुरांतको भारहारी धर्मसंस्थापकः स्मृतः ॥ ११४ ॥
एवं वा पूजयेत् कृष्णं यथाशक्त्यनुसारतः ।
इह भुक्त्वा वरान् भोगानन्ते तु हरितां व्रजेत् ॥ ११५ ॥
अगुरुक्षीर-गुग्गुलु-सिताज्य-मधु-चन्दनैः ।
सारागारे विनिक्षिप्य साधको धूममर्चयेत् ॥ ११६ ॥
वनस्पतिरसोत्पन्नो गन्धाढ्यो गन्ध उत्तमः ।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ ११७ ॥
वर्त्या कर्पूरगर्भिण्या सर्पिषा तिलजेन वा ।
संस्थया स्वर्णपात्रादौ सुदीप्रशिखया ततः ॥ ११८ ॥
अर्घोदकेन संस्कृत्य नन्दजाय निवेदयेत् ।
उत्तार्य दृष्टिपर्यन्तं घंटां वामदिशि स्थिताम् ॥ ११९ ॥
वादयेद् वामहस्तेन दक्षहस्तेन चार्पयेत् ।
सुप्रकाशो महातेजाः सर्वत्र तिमिरापहः ॥ १२० ॥
स बाह्याभ्यन्तरज्योतिर्दीपोऽयं प्रतिगृह्यताम् ।
स्वर्णे वा ताम्रपात्रे वा रौप्ये वा पंकजे दले ॥ १२१ ॥
सितोदकं सशाल्यन्नं सगुडं मधुना युतम् ।
दधिदुग्धघृतोपेतं कदल्यादिफलान्वितम् ॥ १२२ ॥
आनीय देवपुरतो वंबीजेन विनिक्षिपेत् ।
अस्त्रमन्त्रेण विधिवद्धेनुमुद्रां प्रदर्शयेत् ॥ १२३ ॥
चन्द्रबीजं वायुसंस्थं चतुर्दशस्वरान्वितम् ।
नादबिन्दुसमायुक्तं बीजं नंदमृतात्मकम् ॥ १२४ ॥
परायेति च संप्रोच्यानिरुद्धाय वदेत् पुनः ।
नैवेद्यं च तथेत्युक्त्वा कल्पयामि नमो वदेत् ॥ १२५ ॥
प्रोक्तो नैवेद्यमंत्रोऽयमनेन च निवेदयेत् ।
अमृतोपस्तरणमसि स्वाहेति जलमर्पयेत् ॥ १२६ ॥
अन्वाहार्याय प्राणाय स्वाहेति प्रथमाहुतिः ।
अंगुष्ठानामिकामध्या प्राणाख्या मुद्रिका मता ॥ १२७ ॥

आहवनीयायापानाय स्वाहेति द्वितीयका।
कनिष्ठांगुष्ठनाम्नी च मुद्रा तत्परिकीर्तिता ॥ १२८ ॥
गार्हपत्याय व्यानाय स्वाहेति तृतीयाहुतिः।
तर्जन्यंगुष्ठमध्यमाभिस्तन्मुद्रा परिकीर्तिता ॥ १२९ ॥
सत्यायोदानाय स्वाहेति च चतुर्थिका।
मध्यमानामिकांगुष्ठा चतुर्थी च कनिष्ठिका ॥ १३० ॥
आवसथ्याय समानाय स्वाहेति पंचमी मता।
सर्वाभिरङ्गुलीभिस्तत्तन्मुद्रा प्रकीर्तिता ॥ १३१ ॥
प्रणवाद्यैरेभिर्देव देववक्त्रे हुनेद् गुरुः।
ॐ निवेदयामि भगवते जुषातेदं हविर्हरे ॥ १३२ ॥
निवेद्यार्पणमन्त्रोऽयं सपर्यासु प्रकीर्तितः।
क्षणं विलम्ब्य मतिमान् दद्याद् गंडूपकन्ततः ॥ १३३ ॥
अमृतापिधानमसि स्वाहेत्यमुनाम्बुना।
विष्वक्सेनाय वै दद्याच्छेषं नैवेद्यमुत्तमम् ॥ १३४ ॥
उच्छिष्टभोजिनोऽप्येते एतेषामवधारय।
शिवे चण्डे वरायेति विष्णौ विष्वक्सेनाय च ॥ १३५ ॥
शक्त्युच्छिष्टं शेषिकायै दद्यादर्चनसिद्धये।
अन्यथा नैव सिद्धिः स्यादर्चको नरकं व्रजेत् ॥ १३६ ॥
नैवेद्यजातमुद्धृत्य स्थानशुद्धिं विधाय च।
आचमनीयं जलं दद्याद् दंतशोधनमेव च ॥ १३७ ॥
हस्ते लेपं ततो दत्त्वा पुनः पानीयमर्चयेत्।
सूक्ष्मवस्त्रद्वयं दत्त्वा दद्याच्च स्वर्णपादुके ॥ १३८ ॥
पूजास्थानं समानीय बहुमालां तथार्पयेत्।
दिव्यगन्धं ततो दद्यात् ताम्बूलं शशिसंयुतम् ॥ १३९ ॥
स्तोत्रैः स्तुत्वा च विधिवत् कुर्याच्चैव प्रदक्षिणाम्।
पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा तथा ॥ १४० ॥
वचसा मनसा चेति प्रणामोऽष्टांग ईरितः।
भूमौ निपत्य यः कुर्यात् कृष्णेऽष्टांगनतिं सुधीः ॥ १४१ ॥
सहस्रजन्मजं पापं त्यक्त्वा वैकुंठमाप्नुयात्।
नवीननीरदश्यामं नीलेन्दीवरलोचनम् ॥ १४२ ॥
वल्लवीनन्दनं वन्दे कृष्णं गोपालरूपिणम्।
स्फुरद्बर्हदलोद्बद्धनीलकुञ्चितमूर्द्धजम् ॥ १४३ ॥

कदम्बकुसुमोद्बद्धवनमालाविभूषितम् ।
गंडमंडलसंसर्गि चलत्काञ्चनकुण्डलम् ॥ १४४ ॥
स्थूलमुक्ताफलोदारहारोद्द्योतितवक्षसम् ।
हेमांगदतुलाकोटिकिरीटोज्ज्वलविग्रहम् ॥ १४५ ॥
मन्दमारुतसंक्षोभिचलिताम्बरसंचयम् ।
रुचिरौष्ठपुटन्यस्तवंशीमधुरनिस्वनैः ॥ १४६ ॥
लसद्गोपालिकाचेतो मोहयन्तं मुहुर्मुहुः ।
वल्लवीवदनाम्भोजमधुपानमधुव्रतम् ॥ १४७ ॥
क्षोभयन्तं मनस्तासां सस्मेरापांगवीक्षणैः ।
यौवनोद्भिन्नदेहाभिः संसक्ताभिः परस्परम् ॥ १४८ ॥
विचित्राम्बरभूषाभिर्गोपनारीभिरावृतम् ।
प्रभिन्नांजनकालिन्दीजलकेलिकलोत्सुकम् ॥ १४९ ॥
योधयन्तं क्वचिद् गोपान् व्याहरन्तं गवां गणम् ।
कालिन्दीजलसंसर्गि-शीतला-निलकंपिते ॥ १५० ॥
कदम्बपादपच्छाये स्थितं वृन्दावने क्वचित् ।
रत्नभूधरसंलग्नरत्नासनपरिग्रहम् ॥ १५१ ॥
कल्पपादपमध्यस्थं हेममंडपिकागतम् ।
वसन्तकुसुमामोदसुरभीकृतदिङ्मुखम् ॥ १५२ ॥
गोवर्द्धनगिरौ रम्ये स्थितं रासरसोत्सुकम् ।
सव्यहस्ततलन्यस्तगिरिवर्यातपत्रकम् ॥ १५३ ॥
खंडिताखंडलोन्मुक्तमुक्तासार-घनाघनम् ।
वेणुवाद्यमहोल्लासैः कृतहुंकारनिस्वनैः ॥ १५४ ॥
सवत्सैरुन्मुखैः शश्वद् गोपालैरभिवीक्षितम् ।
कृष्णमेवानुगायद्भिस्तच्चेष्टावशवर्त्तिभिः ॥ १५५ ॥
दंडपाशोद्यतकरैर्गोपालैरुपशोभितम् ।
नारदाद्यैर्मुनिश्रेष्ठैर्वेदवेदांगपारगैः ॥ १५६ ॥
प्रीतिसुस्निग्धया वाचा स्तूयमानं परात्परम् ।
य एवं चिन्तयेद्देवं भक्त्या संस्तौति मानवः ॥ १५७ ॥
त्रिसंध्यं तस्य तुष्टोऽसौ ददाति वरमीप्सितम् ।
राजवल्लभतामेति भवेत् सर्वजनप्रियः ॥ १५८ ॥
अचलां श्रियमाप्नोति स वाग्मी जायते ध्रुवम् ।
ततो मुद्राः प्रदर्श्याथ अग्निसंस्कारमाचरेत् ॥ १५९ ॥

मोदनात् सर्वदेवानां द्रावणात् पापसन्ततेः ।
मुद्रास्ताः कथिताः सद्भिर्देवसान्निध्यदायिकाः ॥ १६० ॥

गौतम उवाच—

भगवन् मे त्वया मुद्राः सूचिता न प्रकाशिताः ।
कथं विरचनं तासां तत्तथा ब्रूहि मे गुरो ॥ १६१ ॥

नारद उवाच—

कनिष्ठाङ्गुष्ठकौ सक्तौ करयोरितरेतरौ ।
तर्जनीमध्यमानामासंहृता भुग्नवर्जिता ॥ १६२ ॥
मुद्रैषा गालिनी प्रोक्ता शस्ता गोपालपूजने ।
वनमालाभिनयवत्कराभ्यामागलादधः ॥ १६३ ॥
जानुपर्यन्तमित्येषा मुद्रा स्याद्वनमालिका ।
ओष्ठे वामकराङ्गुष्ठो लग्नस्तस्य कनिष्ठिका ॥ १६४ ॥
दक्षिणाङ्गुष्ठसंयुक्ता तत्कनिष्ठा प्रसारिता ।
तर्जनीमध्यमाऽनामाः किञ्चित् सङ्कुच्य चालिताः ॥ १६५ ॥
वेणुमुद्रेह कथिता सुगुप्ता प्रेयसी हरेः ।
अङ्गुलीः संहताः कृत्वा करयोर्वामदक्षयोः ॥ १६६ ॥
वामाऽनामासमायुक्ता दक्षपाणिकनिष्ठिका ।
दक्षस्य मध्यमाक्रान्ता वामहस्तस्य तर्जनी ॥ १६७ ॥
वाममध्यमयाक्रान्ता दक्षहस्तस्य तर्जनी ।
संहतौ कारयेद् विद्वानंगुष्ठावुभयोरपि ॥ १६८ ॥
धेनुमुद्रा निगदिता गोपिता साधकोत्तमैः ।
करौ संपुटितौ कृत्वा वामपाणिकनिष्ठया ॥ १६९ ॥
निपीड्य दक्षपाणिस्थं दक्षिणाङ्गुलिभिर्दृढम् ।
तस्य वामाङ्गुलिभवैरतिगाढं निपीडयेत् ॥ १७० ॥
इतीयं बिल्वमुद्रा स्यात् प्रशस्ता कृष्णपूजने ।
'कायेन मनसा वाचा बुद्ध्या बुद्ध्या च यत् कृतम् ॥ १७१ ॥
इह जन्मनि पूर्वस्मिन्नथवा पापसंचयम् ।
इमां जानञ्जनस्तस्मान्मुञ्चत्याशु न संशयः ॥ १७२ ॥
देवाः सर्वे नमस्यन्ति प्रणमन्ति तथा जनाः ।
काममुच्चार्य विधिवन्निक्षिपेद्धृदयोपरि ॥ १७३ ॥
कृत्वेतरं करं वामे कृत्वा सम्यक् समाङ्गुलीन् ।
अन्योन्यस्पृष्टकरयोर्मध्यमानामिकाङ्गुलिः ॥ १७४ ॥

अङ्गुष्ठेन च बध्नीयात् कनिष्ठामूलसंस्थिते ।
तर्जन्यौ कारयेदेपा मुद्रा श्रीवत्ससंज्ञिता ॥ १७५ ॥
अनामापृष्ठसंलग्ना दक्षस्य च कनिष्ठिका ।
कनिष्ठिकान्यवबध्नीयादनामादक्षतर्जनी ॥ १७६ ॥
गृहीत्वा दक्षिणाङ्गुष्ठं मध्यमानामिकाद्वयम् ।
ग्रन्थयित्वा तथा वामतर्जनीमध्यमे न्यसेत् ॥ १७७ ॥
दक्षिणे मणिबन्धे च वामाङ्गुष्ठे तु योजयेत् ।
मुद्रेयं कौस्तुभस्योक्ता दर्शनीया प्रयत्नतः ॥ १७८ ॥
कृत्वेतरं करं वामे कृत्वा सम्यक् समाङ्गुलीः ।
तर्जन्युपरि तथा संन्यसेत् करतलं ततः ॥ १७९ ॥
अङ्गुष्ठौ चालनीयौ च मत्स्यमुद्रेयमीरिता ।
करौ संपुटितौ कृत्वा मणिबन्धौ सुयोजितौ ॥ १८० ॥
अङ्गुष्ठे च कनिष्ठे च प्रविधाय सुयोजिते ।
शेपा अङ्गुलयः सर्वा उभयोरपि भङ्गुराः ॥ १८१ ॥
परस्परमसंलग्नाः शून्यमध्ये च कारयेत् ।
उक्ता कलशमुद्रेयं सर्वतन्त्रेपु गोपिता ॥ १८२ ॥
अकुंचितं ततः कृत्वा वामाङ्गुलिचतुष्टयम् ।
प्रसार्य च तदंगुष्ठं दक्षहस्तेन वेष्टयेत् ॥ १८३ ॥
प्रसार्य तर्जनीदक्षां तदङ्गुष्ठं च मन्त्रवित् ।
शंखमुद्रेयमुदिता दर्शनात् पापनाशिनी ॥ १८४ ॥

इति श्रीगौतमीये महातन्त्रे दशमोऽध्यायः ॥ १० ॥

---

## अथ एकादशोऽध्यायः

अथाग्निजयनं वक्ष्ये कृष्णमन्त्रानुसारतः ।
धर्मार्थकाममोक्षाणां यत् कृत्वा फलमश्नुते ॥ १ ॥
गोमयाम्भः समालिप्य कुण्डं सर्वत्र मन्त्रवित् ।
सामान्यार्घ्यं प्रकल्प्याथ पञ्चगव्येन सेचयेत् ॥ २ ॥
त्रिकोणं तद्बहिः षट्कोणं पद्मं प्रकल्पयेत् ।
चतुरस्रं चतुर्द्वारमेवं वा वह्निमण्डलम् ॥ ३ ॥
कुण्डस्योत्तरभागे च त्रिरेखां हस्तमात्रिकाम् ।
दक्षिणोत्तरतस्तद्वत् कुर्याल्लेखात्रयं शुभा ॥ ४ ॥
अर्घ्योद्भिः प्रोक्ष्य सर्वं हि पञ्चशुद्धिं समाचरेत् ।
वीक्षणं मूलमन्त्रेण शरेण प्रोक्षणं स्मृतम् ॥ ५ ॥
ताडनं हेतिमन्त्रेण कवचेनाथ लेपयेत् ।
अस्त्रेण रक्षितं कृत्वा वह्नेः संस्कारमाचरेत् ॥ ६ ॥
पाषाणभवमग्निं च अथवाऽरणिसंभवम् ।
श्रोत्रियाणां गृहोत्थं वा वनस्थमथवा हरेत् ॥ ७ ॥
यदृच्छालाभसंप्राप्तो योग्यो यागप्रकर्मणि ।
निरग्निब्राह्मणाल्लब्धो ह्यर्हलाभकरो भवेत् ॥ ८ ॥
क्षत्रबंधोश्चतुर्थांशफलं दद्याद् धुताशनः ।
वैश्याच्छूद्राच्च विफलं जायते होमकर्मणि ॥ ९ ॥
तस्मात् सर्वप्रयत्नेन वह्निमुक्तं समाचरेत् ।
आनीय ताम्रपात्रस्थं क्रव्यादांशं परिक्षिपेत् ॥ १० ॥
क्रव्यादेभ्यो नमः प्रोक्तः प्रणवाद्यो मनुर्भवेत् ।
पूर्वाग्राणां स्मृता देवा मुकुन्देन्दुपुरंदराः ॥ ११ ॥
रेखाणामुत्तराग्राणां ब्रह्मवैवस्वतेन्दवः ।
ततो वह्नेर्योगपीठमर्चयेत् कर्णिकोपरि ॥ १२ ॥
धर्मज्ञानं च वैराग्यमैश्वर्यमादितो यजेत् ।
पूर्वादिदिक्षु नञ्पूर्वान् तथा धर्मादिकान् यजेत् ॥ १३ ॥
मध्ये च पूजयेद्वह्नेर्नवशक्तीर्विधानवित् ।
पीता श्वेताऽरुणा कृष्णा धूम्रा तीव्रा स्फुलिङ्गिनी ॥ १४ ॥

रुचिरा ज्वालिनी प्रोक्ताः कृशानोर्नवशक्तयः ।
अंअर्कमण्डलं पूज्य उंसोममण्डलं यजेत् ॥ १५ ॥
मंवह्निमण्डलं तद्वदर्चयेद्गन्धपुष्पकैः ।
वागीश्वरीमृतुस्नातां नीलेन्दीवरसन्निभाम् ॥ १६ ॥
वागीश्वरेण सहितामुपचारैः समर्चयेत् ।
शक्तिप्रणवबीजाभ्यां तयोरर्चनमीरितम् ॥ १७ ॥
वागीश्वरीमृतुमतीं पुरुषाधिष्ठितां स्मरेत् ।
वह्निं संस्कृत्य पात्रस्थं रंबीजेन तु मन्त्रयेत् ॥ १८ ॥
चैतन्यं प्रणवेनैव योजयंस्तं प्रयोजयेत् ।
आत्मनोऽभिमुखं वह्निं जानुस्पृष्टमहीतलः ॥ १९ ॥
शिवबीजधिया देव्या योनावेनं विनिक्षिपेत् ।
ततो देवाय देव्यै च दद्यादाचमनीयकम् ॥ २० ॥
गर्भनाड्या धृतं ध्यायेद्वह्निरूपं हरिं गुरुः ।
पश्चाद्गर्भस्य रक्षार्थं प्रदद्याद्गर्भकंकणम् ॥ २१ ॥
भूषाभिर्भूषयेद्देवीं त्रैलोक्योत्पत्तिमातृकाम् ।
रेफवायुपदस्वरैश्च नादबिन्दुविभूषिता ॥ २२ ॥
मादिसान्ताश्च जिह्वानां मनवः परिकीर्तिताः ।
पायौ लिंगे तथा नाभौ हृदये कंठमूलतः ॥ २३ ॥
लम्बिकायां भ्रुवोर्मध्ये जिह्वां ज्वालावचो न्यसेत् ।
हिरण्या गगना रक्ता कृष्णाऽन्या सुप्रभागता ॥ २४ ॥
बहुरूपाऽतिरिक्ता च जिह्वाः कृपीटयोनिजाः ।
सहस्रार्चिः स्वस्तिपूर्णः उत्तिष्ठ पुरुषस्तथा ॥ २५ ॥
धूमव्यापी सप्तजिह्वो धनुर्द्धर इतीरितः ।
षडंगमन्त्रा वह्नेश्च प्रणवाद्यनमोऽन्तका ॥ २६ ॥
हृदयादिक्रमेणैव न्यस्तव्या अंगदेवताः ।
मूर्ध्नि स्कन्धवामपार्श्वकयंधुकटिपार्श्वके ॥ २७ ॥
स्कन्धे मूर्द्ध्नि च विन्यसेत् प्रदक्षिणक्रमेण तु ।
जातवेदाः सप्तजिह्वो हव्यवाहनसंज्ञकः ॥ २८ ॥
अश्वोदरसंज्ञोऽस्य पुनर्वैश्वानराह्वयः ।
कौमारतेजाविश्वमुखोंते देवमुखस्तथा ॥ २९ ॥
एवं विन्यस्तदेहः सन् ज्वालयेन्मनुनाऽमुना ।
हनद्वयं समुच्चार्य दहद्वयं तथा पठेत् ॥ ३० ॥

सर्वज्ञाज्ञापय स्वाहा मन्त्रोऽयं समुदाहृतः ।
अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ॥ ३१ ॥
स्वर्णवर्णममलं संसिद्धं सर्वतोमुखम् ।
संसिद्धेन च मन्त्रेण त्रिभिर्मन्त्रैर्हुताशनम् ॥ ३२ ॥
ज्वालयेन्मतिमान्मन्त्री अन्यथा विफलं भवेत् ।
दर्भैरगर्भैः शुद्धैश्च मूलमध्याग्रछादितैः ॥ ३३ ॥
संस्तरेद्विधिवन्मन्त्री प्रदक्षिणवशादयम् ।
एवं संस्तरणं कुर्याद्वर्जयित्वाऽऽत्मनो दिशम् ॥ ३४ ॥
यज्ञवृक्षोद्भवैस्तद्वत्काष्ठैश्च परिधित्रयम् ।
मध्यमेखलायां तु संस्तरेत्तन्त्रवित्तमः ॥ ३५ ॥
अथवा स्थंडिले मन्त्री भूमौ सर्वं परिस्तरेत् ।
गन्धादिभिः समभ्यर्च्य वह्निदेवं विभावयेत् ॥ ३६ ॥
त्रिनयनमरुणाभं बद्धमौलिं सुशुक्लां-
शुकमरुणायतनयनं कल्पमम्भोजसंस्थम् ।
अभिमत-वरशक्ति-स्वस्तिकाभीति-हस्तं
हसितकमलमालालंकृतांसं कृशानुम् ॥ ३७ ॥
सुवर्णवर्णममलं लसत्स्वर्णोपवीतकम् ।
चतुर्भुजं स्वर्णमालालंकृतांसं समुज्ज्वलम् ॥ ३८ ॥
शब्दब्रह्ममयं स्तोत्रं शब्दायमानमुत्तमम् ।
एवं वा मनसा ध्यायेच्छान्तिकादौ गुरूत्तमः ॥ ३९ ॥
कृष्णं कृष्णगते वर्णे ध्यायेन्मारणकर्मणि ।
मूर्त्तीरष्टौ समभ्यर्च्य षट्कोणे तु षडंगकम् ॥ ४० ॥
मध्ये जिह्वां यजेद्वह्नेर्वह्निं तन्मनुना यजेत् ।
वैश्वानरपदं पूर्वं जातवेदमनंतरम् ॥ ४१ ॥
लोहिताक्षं ततश्चोक्त्वा इहावह ततः परम् ।
सर्वकर्माणि देहि मे स्वाहा मनुः सर्वार्थसिद्धिदः ॥ ४२ ॥
आज्यस्थालीं समानीय क्षालयेदस्त्रमन्त्रतः ।
कुण्डेऽङ्गारान् समुत्तोल्य सेतुना स्वस्त्रमन्त्रतः ॥ ४३ ॥
तस्यामाज्यं विनिक्षिप्य जानीयात्तापनं हि तत् ।
प्रज्वाल्य कुशमाच्छाद्य आज्यं विश्वानले क्षिपेत् ॥ ४४ ॥
अभिद्योतनमित्युक्तं सर्वत्र कर्मसु पुनः ।
कुशान् समुज्ज्वाल्य च तान् निक्षिपेदाज्यमध्यतः ॥ ४५ ॥

मूलमन्त्रेण मतिमानाज्यसंस्कार ईरितः ।
अभिमन्त्र्य च मूलेन रक्षयेदस्त्रमुच्चरन् ॥ ४६ ॥
प्रदर्श्य धेनुयोनिं च आज्यं तदमृतात्मकम् ।
स्रुक्स्रुवौ तु समादाय विधिना निर्मितो गुरुः ॥ ४७ ॥
त्रिशः प्रतापयेद्वह्नौ पुनः प्रक्षाल्य वारिणा ।
पुनः प्रताप्य तौ मंत्री स्थापयेत्तौ स्वदक्षिणे ॥ ४८ ॥
कुशास्तरे च विधिना कुशेनाच्छादयेत्ततः ।
स्रुवमादाय मतिमान् धारयँस्तत्त्रिभागतः ॥ ४९ ॥
दक्षादाज्यं समादाय अग्नये तदनन्तरम् ।
स्वाहेति जुहुयान्मंत्री अग्नेर्दक्षिणलोचने ॥ ५० ॥
वामनस्तद्वदादाय सोमाय स्वाहया ततः ।
मंत्रेणानेन जुहुयादग्नेर्वामविलोचने ॥ ५१ ॥
मध्यात्तद्वत् समादाय अग्नेर्भालस्थलोचने ।
जुहुयादग्निसोमाभ्यां स्वाहेति मनुनाऽमुना ॥ ५२ ॥
इत्यग्नेर्नेत्रवक्त्राणां कुर्यादुद्घाटनं गुरुः ।
संस्कारार्थं ततो वह्नेर्हुनेन्नवनवाहुतीः ॥ ५३ ॥
प्रणवाद्येन मतिमान् स्वाहान्तेन तदुच्चरन् ।
गर्भाधानं पुंसवनं सीमन्तोन्नयनं तथा ॥ ५४ ॥
जातकर्म नाम तथा चोपनिष्क्रमणं तथा ।
चूडोपनयने भूयो वेदाध्ययनमेव च ॥ ५५ ॥
गोदानं च विवाहं च संस्काराः शुभकर्मणि ।
अशुभे मरणं तेषां प्रयुक्तास्तन्त्रवेदिभिः ॥ ५६ ॥
ततश्च पितरौ वह्नेः संपूज्य हृदयं नयेत् ।
वह्निमन्त्रेण विधिवद्दद्यादाहुतिपञ्चकम् ॥ ५७ ॥
समिधः पञ्च जुहुयान्मूलाग्रघृतसंप्लुताः ।
गुरुर्हृदयमंत्रेण विधिवत् स्वाहयाऽन्विताः ॥ ५८ ॥
महागणेशमन्त्रेण हुनेदेकादशाहुतीः ।
सामान्यं सर्वदेवानामेतदग्निमुखं स्मृतम् ॥ ५९ ॥
बहुरूपञ्च जिह्वायामावाह्य परमेश्वरम् ।
गन्धादिभिः समभ्यर्च्य जुहुयात्षोडशाहुतीः ॥ ६० ॥
मूलमन्त्रेण विधिना वक्त्रे कीकरणं त्विदम् ।
पुनस्तेनैव जुहुयादाहुतीः पञ्चविंशतिम् ॥ ६१ ॥

नाडीसंधानमुद्दिष्टं वह्निदैवतयोरपि ।
अंगादिपरिवाराणामेकैकामाहुतिं हुनेत् ॥ ६२ ॥
पुनर्व्याहृतिभिर्हुत्वा होमं कुर्याद्यथाविधि ।
अनुक्ते तु हविर्द्रव्ये तिलाज्यं हविरुच्यते ॥ ६३ ॥
जुहुयाद्रक्तपद्मं वा मधुरत्रयसंयुतम् ।
पायसं मधुरोपेतं जुहुयाद्वा यथामति ॥ ६४ ॥
अस्यान्तर्जुहुयाद्वह्नेः पंडितः सर्वमर्मसु ।
बधिरत्वं कर्णहोमे नेत्रे त्वन्धत्वमाप्नुयात् ॥ ६५ ॥
नासिकायां मनःपीडाशिरोरुग्मोहमृत्युदः ।
यतः काष्ठं ततः श्रोत्रं यतो धूमोऽथ नासिका ॥ ६६ ॥
यतोऽल्पज्वलनं नेत्रं यतो भस्म ततः शिरः ।
ततः प्रज्वलितो वह्निस्तन्मुखं जातवेदसः ॥ ६७ ॥
एवं होमं विधायाथ मतिमान् तापयेच्चरुम् ।
पात्रे ताम्रमये शुद्धे दुग्धेन कापिलेन वै ॥ ६८ ॥
शुद्धतंडुलसंभूतं-प्रसृतेर्विंशतिं क्षिपेत् ।
घृतधारां ततो दद्याद्यावद्भिन्नो भवेच्चरुः ॥ ६९ ॥
अथ हुत्वा च मेधावी कृष्णमावाह्य मन्त्रवित् ।
विसृजेद्विन्दुगे धाम्नि नित्यहोमोऽयमीरितः ॥ ७० ॥
स्वगृह्योक्तविधानेन बलिं वैष्णवमाचरेत् ।
भागद्वयमथ चरुं कृष्णाय विनिवेदयेत् ॥ ७१ ॥
एकं भागं स्वयंभुक्त्वाऽपरं शिष्ये समर्पयेत् ।
शयीत संयतः शिष्यः कंबले वा कुशासने ॥ ७२ ॥
भूतेश्वरस्य मन्त्रेण आशिषा बन्धयेद् गुरुः ।
ततः शयीत तां रात्रिमधिवासोऽयमीरितः ॥ ७३ ॥

इति श्रीगौतमीये महातन्त्रे एकादशोऽध्यायः ॥ ११ ॥

# अथ द्वादशोऽध्यायः

ततः प्रातः समुत्थाय कृतनित्यक्रियो गुरुः ।
कृतकृत्योपि शिष्यस्तु निषीदेद् गुरुसन्निधौ ॥ १ ॥
कथयेद्रात्रिवृत्तान्तं शुभं वा यदि वाऽशुभम् ।
सुमंगलीभिर्नारीभिः सहितं भोजनं मिथः ॥ २ ॥
गिरिशृङ्गारोहणं च हस्त्यश्वरथरोदसीम् ।
आरोहणं सौधगृहे देवोत्सवनिरीक्षणम् ॥ ३ ॥
मंगलं ससुरामांसं दर्शनं स्पर्शनं तथा ।
मन्त्रसिद्धस्य लिङ्गानि प्रोक्तानि तव सुव्रत ॥ ४ ॥
अनाकूल्यानि कथये शृणु निन्द्यानि सर्वतः ।
कृष्णवर्णभटैः स्वप्ने प्रहारस्तैललेपनम् ॥ ५ ॥
विप्राणां रोपवादे च परस्त्रीणां निषेवणम् ।
सिद्धविघ्नानि चोक्तानि अन्यानि विदितानि च ॥ ६ ॥
एवं दोषं समाज्ञाय क्षणात् परिहरेद् गुरुः ।
होमं कुर्यात् सहस्रादिदिव्यैः कल्पोक्तदर्शितैः ॥ ७ ॥
साङ्गं च सपरीवारं हुत्वा बलिमथाचरेत् ।
मण्डलस्य बहिर्भागे लोकेशादिबलिं हरेत् ॥ ८ ॥
नक्षत्राणां सवाराणां सराशीनां यथाक्रमम् ।
गन्धाद्यैः सम्यगभ्यर्च्य तत्तन्मन्त्रैस्तु मन्त्रवित् ॥ ९ ॥
शुद्ध्वाऽन्नेन सतोयेन तत्तत्स्थानेष्वनुक्रमात् ।
दद्याद्बलिं गन्धपुष्पधूपदीपकमादरात् ॥ १० ॥
ताराणामश्विन्यादीनां राशिः पादाधिकद्वयम् ।
मेषादि— शुक्रनक्षत्र—संज्ञापूर्वमनन्तरम् ॥ ११ ॥
देवताभ्यः पदं प्रोक्त्वा दिवा नक्तं वदेत्तथा ।
चारिभ्योऽप्यथ भूतेभ्यस्तेभ्यश्चैव नमो वदेत् ॥ १२ ॥
एवं राशौ तु संपूर्णे तस्मिस्तद्वत् प्रयोजयेत् ।
तथा राश्यधिपानां च ग्रहाणां तत्र तत्र तु ॥ १३ ॥
मीनमेषान्तराले तु करणानां बलिं हरेत् ।
मेषस्य वृश्चिकस्यारः शुक्रो वृषतुलाधिपः ॥ १४ ॥

बुधो युक्कन्ययोश्चाथ चन्द्रः कर्कटकाधिपः ।
सिंहराश्यधिपो भानुश्चापमीनाधिपो गुरुः ॥ १५ ॥
मकरस्यापि कुम्भस्य मन्दो राश्यधिपा इमे ।
इलतामिन्द्राय इत्यादिविष्णुपारिषदं तथा ॥ १६ ॥
दद्याद् बलिं दिगीशाय विधिनाऽथ गुरूत्तमः ।
ॐ अश्विनीदेवताभ्यो दिवानक्तंचारिभ्यो भूतेभ्यो नमः ॥१७॥

रोहिणीमृगशीर्षपूर्वापाढादेवताभ्यो दिवानक्तंचारिभ्यो भूतेभ्यो नमः ।
फाल्गुन्युत्तरफाल्गुनीपाददेवताभ्यो दिवानक्तंचारिभ्यो भूतेभ्यो नमः॥ १८॥
उत्तरफाल्गुनीत्रिपाददेवताभ्यो दिवानक्तंचारिभ्यो भूतेभ्यो नमः ।
हस्तचित्रार्धदेवताभ्यो दिवानक्तंचारिभ्यो भूतेभ्यो नमः ॥१९॥
चित्रोत्तरारार्द्धस्वातीविशाखात्रिपाददेवताभ्यो ,, ,, ।
विशाखापाददेवताभ्यो दिवानक्तंचारिभ्यो भूतेभ्यो नमः ॥२०॥
मूलदेवताभ्यो रेवतीदेवताभ्यो दिवानक्तंचारिभ्यो भूतेभ्यो नमः ॥२१॥
पूर्वापाढोत्तरापाढपाददेवताभ्यो दिवानक्तंचारिभ्यो भूतेभ्यो नमः ॥२२॥
उत्तरापाढश्रवणादेवताभ्यो दिवानक्तंचारिभ्यो भूतेभ्यो नम ।
धनिष्ठार्द्धशतभिषादेवताभ्यो दिवानक्तंचारिभ्यो भूतेभ्यो नमः ॥२३॥
शतभिषापूर्वभाद्रपाददेवताभ्यो दिवानक्तंचारिभ्यो भूतेभ्यो नमः ।
मेषा-श्विनीभरणीकृत्तिकापाददेवताभ्योदिवानक्तंचारिभ्योभूतेभ्योनमः॥२४॥
वृष-कृत्तिकात्रिपादरोहिणीमृगशिरःपूर्वार्द्धदेवताभ्यो ,, ।
मिथुन-मृगशिरार्द्धपुनर्वसुत्रिपाददेवताभ्यो दिवानक्तं ,, ॥२५॥
कर्कट-पुनर्वस्वेकपादपुष्याश्लेषादेवताभ्यो दिवानक्तं ,, ।
सिंह-मघापूर्वोत्तराफाल्गुनीपाददेवताभ्यो दिवानक्तंचारिभ्यो ,, ॥२६॥
कन्योत्तरात्रिपादहस्तचित्रार्द्धदेवताभ्यो दिवानक्तंचारिभ्यो भूतेभ्यो नमः ।
तुला-चित्रार्द्धस्वातीविशाखात्रिपाददेवताभ्यो दिवानक्तं ,, ॥२७॥
वृश्चिक-विशाखापादानुराधाज्येष्ठादेवताभ्यो दिवानक्तं ,, ।
धनु-मूलपूर्वापाढोत्तरापाढपाददेवताभ्यो दिवानक्तं ,, ॥२८॥
मकरो-त्तरापाढत्रिपादश्रवणाधनिष्ठार्द्धदेवताभ्यो दिवानक्तं ,, ।
कुम्भ-धनिष्ठोत्तरार्द्धशतभिषापूर्वभाद्रत्रिपाददेवताभ्यो दिवा० ,, ।
मीन-पूर्वभाद्रपादोत्तरभाद्ररेवतीदेवताभ्यो दिवानक्तं ,, ॥२९॥

पाददेवताभ्यो नमः शुक्रदेवताभ्यो नमः ।
बुधदेवताभ्यो नमः चन्द्रदेवताभ्यो नमः ॥ ३० ॥

आदित्यदेवताभ्यो नमः बृहस्पतिदेवताभ्यो नमः।
शनैश्चरदेवताभ्यो नमः सिंहदेवताभ्यो नमः ॥ ३१ ॥
व्याघ्रदेवताभ्यो नमः वराहदेवताभ्यो नमः।
खरदेवताभ्यो नमः गजदेवताभ्यो नमः ॥ ३२ ॥
वृषदेवताभ्यो नमः कुक्कुरदेवताभ्यो नमः।
हरदुर्गागुहविष्णुब्रह्मलक्ष्मीधनाधिपाः
वारदेवता इति प्रोक्तास्तेभ्यो बलिं हरेद् गुरुः ॥ ३३ ॥
इत्थं बलिविधिः प्रोक्तः सर्वविघ्नौघनाशनः।
गोपुच्छमूषिकां त्यक्त्वा तृणैरास्तरणं भवेत् ॥ ३४ ॥
जंबीजं कलिवृक्षं च त्यक्त्वा चैधांसि कल्पयेत्।
शुभसिन्दूरबालार्कवर्णो वह्नेः सुशोभनः ॥ ३५ ॥
भेरीवादित्रगंभीरशब्दो वह्नेः शुभप्रदः।
कर्पूरचन्दनवृन्दाभधूमः सर्वार्थसिद्धिकृत् ॥ ३६ ॥
खरवायसवच्छब्दो वह्नेः सर्वविनाशकृत्।
कृष्णः कृष्णगतिर्वर्णो राज्यं चापि विनाशयेत् ॥ ३७ ॥
पूर्णाहुतिं ततो दद्यादेप चैव विधानवित्।
ॐ भूर्भुवः स्वरग्नये पृथिव्यै च महते स्वाहा ततः ॥ ३८ ॥
ॐ भूर्भुवश्चान्तरीक्षाय च देवाय महते च स्वाहा ततः।
स्वश्चन्द्रमसे च दिग्भ्यश्च नक्षत्रेभ्यश्च स्वाहा।
ॐ भूर्भुवः स्वश्चन्द्रमसे नक्षत्रेभ्यश्च दिग्भ्यश्च स्वाहा ॥ ३९ ॥
स्रुवस्रुचौ समादाय घृतेनापूर्य तौ पुनः।
होमद्रव्याणि निःक्षिप्य नाभौ संस्थाप्य तौ पुनः ॥ ४० ॥
ब्रह्मार्पणेन मनुना दद्यात् पूर्णाहुतिं पुनः।
इतः प्राणं पूर्वं प्राणबुद्धिदेहधर्माधिकारतः ॥ ४१ ॥
जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वचसा कर्मणा-
हस्ताभ्यामुदरेण शिश्ना यत् स्मृतं यत् कृतं-
यदुक्तं तत् सर्वं ब्रह्मार्पणं भवतु स्वाहा।
ब्रह्मार्पणमनुः सोयं ब्रह्मार्पणविधौ स्मृतः ॥ ४२ ॥

इति श्रीगौतमीये महातन्त्रे द्वादशोऽध्यायः ॥ १२ ॥

## अथ त्रयोदशोऽध्यायः

एवं होमविधिं कृत्वा कुण्डस्थण्डिलदेवताः ।
दिक्पालदेवतां चापि अंकुरार्पणदेवताः ॥ १ ॥
आनयेत् कलशे चापि कृष्णैक्यं भावयेद् गुरुः ।
कृष्णं सुधात्मतां नीत्वा शिष्यमाहूय मन्त्रवित् ॥ २ ॥
वाससा नेत्रं बध्नीयान्नेत्रमन्त्रेण यत्नतः ।
पाययित्वा पञ्चगव्यं मन्त्रामृतमयं शुभम् ॥ ३ ॥
स्यस्यातंतं मन्त्रज्ञोऽध्वषट्कं च विशोधयेत् ।
विष्णुतत्त्वानि संशोध्य अभिषेकगृहं नयेत् ॥ ४ ॥
वर्णः कालापदं तत्त्वमन्त्रो भुवनमेव च ।
अध्वषट्कमिति प्रोक्तं मुनिभिस्तन्त्रवेदिभिः ॥ ५ ॥
वर्णाध्वा वर्णसंघश्च कलाध्वा सद्भिरीरितः ।
पदाध्वा पदसङ्घः स्यात्तत्त्वाध्वा पञ्चविंशतिः ॥ ६ ॥
षट्त्रिंशद्वैष्णवं तत्त्वमिति तत्त्वविदो विदुः ।
मन्त्राध्वा मन्त्रराशिः स्यात्ते हि वैदिकतान्त्रिकाः ।
भुवनाध्वेतिपूर्वतः ॥ ७ ॥
ॐ वेदगर्भो नमश्चान्ते मनुरध्वविशोधने ।
नवाहुतीर्गुरुः कुर्यादेकैकाध्वविशोधने ॥ ८ ॥
हस्ते गृहीत्वा तं शिष्यमभिषेकगृहं नयेत् ।
निवेश्य मातृकायन्त्रे सेचयेत् कलशामृतैः ॥ ९ ॥
कृष्णानुभवपूर्णात्मा आचार्यश्चानयेद् घटम् ।
गोरोचनापल्लवानि कल्पवृक्षधियास्पृशत् ॥ १० ॥
शिरः शिरसि संयोज्य विलोममातृकां जपन् ।
मूलमन्त्रतया जप्त्वा कुर्य्याद्देवाभिषेचनम् ॥ ११ ॥
रत्नौषधिकलाभिश्च जलं कृष्णात्मकं भवेत् ।
तेन तत्सेकमात्रेण शिशुः कृष्णो न चान्यथा ॥ १२ ॥
कृष्णात्मकं तु तन्त्रोऽयं शिरआदि पदावधि ।
अभिषिञ्चेत्तेन मन्त्री कृष्णात्मा भवति ध्रुवम् ॥ १३ ॥
एवं यः कुरुते भक्त्या आत्मानं विष्णुसंस्कृतम् ।
इह भुक्त्वा यथाकामं देहान्ते तत्पदं व्रजेत् ॥ १४ ॥

चन्दनालेपिताङ्गश्च द्विजाशीर्भिश्च संयुतः ।
कृष्णात्मकं देशिकं तं प्रणम्य च पुनः पुनः ॥ १५ ॥
निषीदेत् सन्निधौ तस्य नियतो विनयान्वितः ।
न्यासजालं तस्य देहे गुरुः संन्यस्य यत्नतः ॥ १६ ॥
दक्षकर्णे वदेन्मन्त्रं त्रिवारं पूर्णमानसः ।
गणेशादिमनुं चोक्त्वा समया कथयेद् गुरुः ॥ १७ ॥
मन्त्रार्थं मन्त्रबीजं च तच्छक्तिं तत्फलानि च ।
आत्मानं दर्शयेत् साक्षात् स्वनाम्ना मातृमयत्वतः ॥ १८ ॥
मन्त्रकुण्डलिदेवानामेकार्थत्वं प्रकाशयेत् ।
सिद्धान्तं वैष्णवं यत्नाद् बोधयेत्त तस्य चेद् गुरुः ॥ १९ ॥
यथा ग्रामागतं तोयं विष्ठामूत्रादिदूषितम् ।
गंगायां मिलितं तत्तु गंगैव भवति ध्रुवम् ॥ २० ॥
तथा मातृमानमेयंत्रयातीतो भवेच्छिशुः ।
शिष्योपि पूर्णतां मत्वा गुरुं यत्नेन तोषयेत् ॥ २१ ॥
गुरवे दक्षिणां दद्याद्वित्तार्द्धं भक्तितत्परः ।
तदर्द्धं वा ततो दद्याद्यथाशक्त्यथ भक्तितः ॥ २२ ॥
वित्तशाठ्यं न कुर्वीत कृतेऽनर्थं समावहेत् ।
गोभूहिरण्यवस्त्रादि गुरवेऽथ निवेदयेत् ॥ २३ ॥
गुरुपुत्रे च तत्पत्न्यै तच्छिष्येऽपि स्वभक्तितः ।
वस्त्रालङ्करणं दद्याद् भोज्यमिष्टं यथारुचि ॥ २४ ॥
ऋत्विग्भ्यो दक्षिणां दद्याद् वस्त्रालङ्कारसंयुताम् ।
सा तु ताँस्तर्पयेद्भक्त्या यथाविभवविस्तरात् ॥ २५ ॥
ततः प्रभृति मन्त्रज्ञो गुरुशासनसंस्थितः ।
यथा मन्त्रे तथा देवे यथा देवे तथा गुरौ ॥ २६ ॥
पश्येदभेदतो मन्त्री ह्येवंभक्तिक्रमो मुने ।
अभक्तिभजनाल्लोके देवताक्लेशदायकः ॥ २७ ॥
त्रिदिनं निवसेद् भक्त्या सिद्धये गुरुसन्निधौ ।
अन्यथा तद्गतं तेजो गुरुमेति न संशयः ॥ २८ ॥

इति श्रीगौतमीये महातन्त्रे सर्वोत्तमोत्तमे त्रयोदशोऽध्यायः ॥ १३ ॥

## अथ चतुर्दशोऽध्यायः

चैत्रे मास्यथ वा कृत्वा शुभर्क्षे गुरुशासनात् ।
द्वादश्यां शुक्लपक्षे च माघवे मासि तत्तिथौ ॥ १ ॥
आरभेदमलायां चेत् पुरश्चर्यां स्वसिद्धये ।
जपहोमौ तर्पणं च सेको ब्राह्मणभोजनम् ॥ २ ॥
पञ्चाङ्गोपासनं लोके पुरश्चरणमुच्यते ।
आदौ पुरस्क्रियां कर्तुं कुर्य्याद् भूमेः परिग्रहम् ॥ ३ ॥
स्वेच्छाहारविहाराय तत ऊर्ध्वं न लङ्घयेत् ।
जीवहीनो यथा देहः सर्वकर्मसु न क्षमः ॥ ४ ॥
पुरश्चरणहीनोऽपि न तथा फलदो मनुः ।
पर्वताग्रे नदीतीरे गोष्ठे देवालये तथा ॥ ५ ॥
पुण्यारण्ये तथा तीरे समुद्रस्य निजे गृहे ।
तुलसीकाननेऽरण्ये बिल्वमूले च शस्यते ॥ ६ ॥
विष्णुक्षेत्रे च विधिवत् सिद्धये जपमारभेत् ।
अन्यथा भोजनादोषात्सिद्धिहानिः प्रजायते ॥ ७ ॥
पुरश्चरणकृन्मन्त्री भक्ष्याभक्ष्यं विचारयेत् ।
अन्यथा भोजनादोषात् सिद्धिहानिः प्रजायते ॥ ८ ॥
सत्कुलस्य न जातानि शुचीनां श्रीमतां सताम् ।
गृहस्थानां वदान्यानां भिक्षाशीतोग्रजन्मनाम् ॥ ९ ॥
भुंञ्जानो वा हविष्यान्नं शाकं च विहितं तथा ।
मूलं च क्रमुकेन्दूनां वर्जयेद् विहितं मुने ॥ १० ॥
पयो दधि फलं चापि नारिकेलं यथोदितम् ।
हविष्यं वा यथाश्नीयात् सक्तुयवसमुद्भवम् ॥ ११ ॥
आम्रमामलकं चैव मूलं केशरिसंभवम् ।
रम्भाफलं तिन्तिडीकं कमलागरुरङ्ककम् ॥ १२ ॥
फलान्येतानि भोज्यानि एवमन्यानि वर्जयेत् ।
भूशय्यां ब्रह्मचारित्वं मौनं चाप्यनसूयताम् ॥ १३ ॥
नित्यं त्रिसवनस्नानं क्षुद्रकर्मविवर्जनम् ।
नित्यपूजा नित्यदानं देवतास्तुति—कीर्तनम् ॥ १४ ॥

नैमित्तिकार्च्चनं चैव विश्वासो गुरुदेवयोः।
जपनिष्ठा द्वादशैते धर्माः स्युर्मन्त्रसिद्धिदाः॥ १५॥
नित्यं सूर्य्यमुपस्थाय तस्य चाभिमुखो जपेत्।
देवताप्रतिमादौ च वह्नौ चाभ्यर्च्य तन्मुखः॥ १६॥
अनिर्वेदस्तथाऽव्यग्रः शास्त्रोक्ताचारपालकः।
स्नानपूजाजपध्यानहोमतर्पणतत्परः॥ १७॥
निष्कामो देवतायां च सर्वकर्मनिवेदकः।
एवमादौ च नियमान् पुरश्चरणमुच्चरेत्॥ १८॥
शक्तौ त्रिसवनस्नानमन्यथा द्विःसकृत्तथा।
अस्नातस्य फलं नास्ति न वा तर्पयतः पितॄन्॥ १९॥
अमेध्यसंभवं देहं जलादिन्द्रियशुद्धना।
तस्मान्मुख्यं जलस्नानं सर्वेषां मुनिभिर्मतम्॥ २०॥
ऋतुकालं विना मन्त्री स्वस्त्रियं नापि संस्पृशेत्।
मैथुनं तत्कथालापं तद्गोष्ठीं परिवर्जयेत्॥ २१॥
पर्वते सिन्धुतीरे वा पुण्यारण्ये नदीतटे।
यदि कुर्य्यात्पुरश्चर्य्यां तत्र कूर्मं न चिन्तयेत्॥ २२॥
दीपस्थानं द्विधा प्रोक्तं मुखपृष्ठं च मन्त्रिणः।
दीपस्थाने भवेत्सिद्धिर्नान्यथा कोटिजापनैः॥ २३॥
पूर्वोत्तरविभागेन चतुःसूत्रनिपातनात्।
नवकोष्ठं भवेदेतत् कूर्म्मदेहमनुत्तमम्॥ २४॥
पूर्वस्यां दिशि मन्त्रज्ञः प्रदक्षिणक्रमेण तु।
कादिवर्गाल्लिखेद्विद्वान् पञ्च पञ्च विभागशः॥ २५॥
यादिवर्गं शादिवर्गं लक्ष्मीशे च संलिखेत्।
कूर्मस्याङ्गं च कूर्मवत्कुर्याच्छोभा यथा भवेत्॥ २६॥
स्वराणां युग्मयुग्मं च मध्ये चाष्टसु दिक्षु च।
एवमष्टाङ्गवान् कूर्मः सर्वेषां सिद्धिदीपकः॥ २७॥
दीपनार्थं लिखेन्मध्ये पूजयेत्तं विभावयेत्।
यस्यां दिशि ग्रामनामाद्यक्षरं दृश्यते तथा॥ २८॥
कूर्मवक्त्रं च जानीयात्तत्र सिद्धिरनुत्तमा।
वक्त्रपार्श्वे च कोष्ठे द्वे करौ कूर्मस्य विद्धि हि॥ २९॥
मध्ये कुक्षौ उभौ ज्ञेयौ पादौ द्वौ शेषपुच्छकः।
एवं कूर्मं विजानीयाद् दीपचक्रविरचकः॥ ३०॥

मुखे शुद्धिर्भवेन्नूनं मध्ये सिद्धिः प्रजायते।
उदासीनः करस्थश्चेद् जङ्घस्थो दुःखमाप्नुयात् ॥ ३१ ॥
पादस्थः पीड्यते मन्त्री बन्धनोच्चाटनादिभिः।
पुच्छे मृत्युर्भवेन्नूनमेवं कूर्मस्य संस्थितिः ॥ ३२ ॥
मन्त्राक्षरेण मैत्रं चेत् कूर्मनाम्नो भवेद् यदि।
साधकस्य च नाम्नाथ, किं न सिध्यति मान्त्रिणः ॥ ३३ ॥
पञ्चाशद्वर्णरूपेण चेत्रेण विश्वविग्रहः।
तस्माच्चक्रं विचार्य्यैवं मित्रं चेत् सर्वसिद्धिदम् ॥ ३४ ॥
यस्मिन् देशे दीपपतिः सगुणं नाममन्त्रयोः।
तत्र यत्नेन गन्तव्यं स पीठो दुर्लभो मतः ॥ ३५ ॥
रुद्राक्षैरपि पद्माक्षैः पुत्रजीवैश्च चन्दनैः।
स्फाटिकैश्च प्रवालैश्च कुशग्रन्थिभवैस्तथा ॥ ३६ ॥
तथाऽऽमलकसंभूतैस्तुलसीकाष्ठनिर्मितैः।
एभिश्च मालिकां कुर्यात् प्रज्ञावान् वैष्णवे मनौ ॥ ३७ ॥
रुद्राक्षसंभवा या सा त्वनन्तफलदा मता।
पुण्डरीकभवा माला गोपालमनुसिद्धिदा ॥ ३८ ॥
पुत्रजीवभवा या तु पुत्रं वितनुतेऽचिरात्।
अष्टोत्तरशतमणिभिर्निर्मिता या तु मालिका ॥ ३९ ॥
राज्यं वितनुते नृणां देहान्ते मोक्षदायिनी।
मोक्षार्थी पंचविंशत्या पुत्रार्थी त्रिंशता जपेत् ॥ ४० ॥
चत्वारिंशन्मणिभवा अभिचाराय केवलम्।
पंचाशन्मणिभिर्माला सर्वकर्मप्रसाधिका ॥ ४१ ॥
अकारादिक्षकारान्ता अक्षमालेति कीर्तिता।
क्षान्तं मेरुमुखं तत्र कल्पयेन्मुनिसत्तम ॥ ४२ ॥
अनया सर्वमंत्राणां जपः सर्वसमृद्धिदः।
नित्यं जपं करे कुर्य्यान्न तु काम्यमबोधनः ॥ ४३ ॥
आरभ्यानामिकामूलात् परिवर्त्तेन वै क्रमात्।
तर्जनीमध्यपर्य्यन्तं जपेदेवासु पर्वसु ॥ ४४ ॥
गोपालमन्त्रमन्त्राणां करमालेयमीरिता।
कार्पाससंभवं सूत्रं पुण्यस्त्रीभिर्विनिर्मितम् ॥ ४५ ॥
अथवा पट्टसूत्रेण स्वर्णसूत्रेण वा तथा।
अणिमादिकमोक्षान्ताः सिद्धयः स्वर्णसूत्रके ॥ ४६ ॥

पट्टसूत्रं वश्यकरं धनपुत्रादिवर्द्धनम् ।
कार्पाससंभवं सूत्रं धर्मकामार्थमोक्षदम् ॥ ४७ ॥
त्रिगुणं त्रिगुणीकृत्य ग्रन्थयेच्छिल्पशास्त्रतः ।
मुखे मुखं तु संयोज्य पुच्छे पुच्छं नियोजयेत् ॥ ४८ ॥
गोपुच्छसदृशी माला यद्वा सर्पाकृतिः शुभा ।
एवं निर्माय मालां वै शोधयेन्मुनिसत्तम ॥ ४९ ॥
अश्वत्थपत्रनवकैः पद्माकारं तु कारयेत् ।
तन्मध्ये स्थापयेन्मालां मातृकां मूलमुच्चरन् ॥ ५० ॥
नित्यनैमित्तिकं कृत्वा सामान्यार्घ्यं विधाय च ।
क्षालयेदीशसूक्तेन लिम्पेत्तत्पुरुषेण तु ॥ ५१ ॥
गन्धैरनल्पैर्मतिमानघोरेण तु धूपयेत् ।
अघोरेणैव सूक्तेन शतान्न्यूनं तु मन्त्रयेत् ॥ ५२ ॥
वामदेवेन सूक्तेन समीकुर्याद्विचक्षणः ।
एकैकमणिमादाय ब्रह्मग्रन्थिं प्रकल्पयेत् ॥ ५२क ॥
एकैकमातृकावर्णान् प्रथनादौ तु संजपेत् ।
तत्सजातीयमेकाक्षं मेरुं च त्रिः प्रकल्पयेत् ॥ ५३ ॥
एवं संग्रथितां मालां पुनः पद्मोपरि न्यसेत् ।
तत्रावाह्य यजेद्देवं यथाविभवविस्तरैः ॥ ५४ ॥
मन्त्रयेन्मूलमन्त्रेण क्रमेण क्रमयोगतः ।
तथैव मातृकावर्णैर्मन्त्रयेत्तन्त्रतत्त्ववित् ॥ ५५ ॥
क्षालयेत् पञ्चगव्येन पुनरीशानसूक्ततः ।
पुनर्विलिप्य गन्धेन जपेन्मन्त्रं यथेच्छया ॥ ५६ ॥
नान्यं मन्त्रं जपेन्मन्त्री कम्पयेन्न विधूनयेत् ।
कम्पनात् सिद्धिहानिः स्याद्धूननं बहुदुःखकृत् ॥ ५७ ॥
शब्दे जाते भवेद्रोगः करभ्रष्टो विनाशकृत् ।
छिन्ने सूत्रे भवेन्मृत्युस्तस्माद्यत्नपरो भवेत् ॥ ५८ ॥
जपान्ते कर्णदेशे वा उच्चस्थाने च वा न्यसेत् ।
त्वं माल्ये सर्वदेवानां सर्वसिद्धिप्रदा मता ।
तेन सत्येन मे सिद्धिं देहि मातर्नमोऽस्तु ते ॥ ५९ ॥
इत्युक्त्वा परिपूज्याथ गोपयेद्यत्नतोऽप्यति ।
मालामन्त्रं च मुद्रां च पशुभ्यो न प्रकाशयेत् ॥ ६० ॥

प्रकाशने कार्य्यहानिरित्युक्तं तंत्रवेदिभिः।
अंगुष्ठतर्ज्जनीभ्यां च जपाच्छुभशतं भवेत् ॥ ६१ ॥
तर्ज्जन्यङ्गुष्ठयोगेन शत्रूच्चाटनकारकः।
अंगुष्ठमध्यमायोगान्मन्त्रसिद्धिः सुनिश्चिता ॥ ६२ ॥
अंगुष्ठानामिकायोगादुच्चाटोद्बन्धने मते।
ज्येष्ठाकनिष्ठायोगेन शत्रूणां नाशनं मतम् ॥ ६३ ॥
इति ते कथितो विद्वन्मालायाः परिनिर्णयः।
शक्त्या त्रिसवनस्नानमन्यथा द्विःसकृत्तथा ॥ ६४ ॥
त्रिसन्ध्यं प्रजपेन्मन्त्रं पूजनं तत्समं भवेत्।
एकदा वा भवेत् पूजा न जपेत् पूजनं विना ॥ ६५ ॥
प्रातः कालेऽथवा पूजा जपान्ते वा यजेद्धरिम्।
प्रातः कालं समारभ्य जपेन्मध्यंदिनावधि ॥ ६६ ॥
पशुभावे स्थिता मन्त्राः केवला वर्णरूपिणः।
सौषुम्नध्वन्युच्चरिताः प्रभुत्वं प्राप्नुवन्ति ते ॥ ६७ ॥
मन्त्राक्षराणि चिच्छक्तौ प्रोक्तानि च विभावयेत्।
तामेव परमे व्योम्नि परमामृतबृंहितः ॥ ६८ ॥
दर्शयत्यात्मसद्भावं पूजाहोमादिभिर्विना।
मनः संहृत्य विषयान् मंत्रार्थगतमानसः ॥ ६९ ॥
न द्रुतं न विलम्बं च जपेन्मौक्तिकपङ्क्तिवत्।
जपः स्यादक्षरावृत्तिर्मानसोपांशुवाचिकैः ॥ ७० ॥
धिया यदक्षरश्रेणिं वर्णस्वरपदात्मिकाम्।
उच्चरेदर्थमुद्दिश्य मानसः स जपः स्मृतः ॥ ७१ ॥
जिह्वौष्ठौ चालयेत् किंचिद्देवतागतमानसः।
किंचिच्छ्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः ॥ ७२ ॥
मन्त्रमुच्चारयेद्वाचा वाचिकः स जपः स्मृतः।
पश्यन्त्यादित्रिभिर्भेदैः कथितं जपलक्षणम् ॥ ७३ ॥
एवं जपं पुरा कृत्वा तेजोरूपं समर्पयेत्।
देवस्य दक्षिणे हस्ते कुशपुष्पार्घ्यवारिभिः ॥ ७४ ॥
सफलं तद्विभाव्यैवं प्राणायामत्रयं चरेत्।
जपस्यादावथ चान्ते त्रितयं त्रितयं चरेत् ॥ ७५ ॥
न न्यूनं नाधिकं चापि जपं कुर्याद्दिने दिने।
यदि कुर्यात्प्रमादात्तु तदा नेष्टमवाप्नुयात् ॥ ७६ ॥

न्यूने न्यूनाङ्गदोपः स्यादधिके चाधिकाङ्गकम् ।
यथाविधि कृतानि हि फलन्ति तान्ययत्नतः ॥ ७७ ॥
जपान्ते प्रत्यहं मन्त्री होमयेत्तद्दशांशतः ।
तर्पणं मार्जनं चैव तत्तद्दशांशतो मुने ॥ ७८ ॥
प्रत्यहं भोजयेद्विप्रान् न्यूनाधिकप्रशान्तये ।
विप्रभोजनमात्रेण व्यङ्गः साङ्गो भवेद् ध्रुवम् ॥ ७९ ॥
गोषु शुश्रूषणं कुर्यात्ताभ्यश्च यवसंप्रदः ।
गोषु पेप्रीयमाणासु गोपालोऽयं प्रसीदति ॥ ८० ॥
कर्मान्ते संस्मरेत् कृष्णं चान्तःकरणशुद्धये ।
नामसंकीर्तनं विष्णोः सर्वविघ्ननिकृन्तनम् ॥ ८१ ॥
अथवा लक्षपूर्त्तौ च होमादिकसमाचरेत् ।
सम्पूर्णायां प्रतिज्ञायां तर्पणादि तथा चरेत् ॥ ८२ ॥
विष्णोर्निवेदितान्नं तद्रात्रौ भुञ्जेदकुत्सयन् ।
यदन्ना देवता यस्य तदन्नः पुरुषो भवेत् ॥ ८३ ॥
शयीत शुद्धशय्यायां कम्बले वा कुशास्तरे ।
एवं प्रतिदिनं कुर्य्यात्सर्वं साङ्गं व्रतं भवेत् ॥ ८४ ॥
होमं च पूर्ववत् कृत्वा पायसैरथवाम्बुजैः ।
होमाभावे जपं कुर्याद्धोमसंख्याचतुर्गुणम् ॥ ८५ ॥
षड्गुणं वाऽष्टगुणितं यथासंख्या द्विजादयः ।
शूद्रस्य विप्रमत्यस्य तत्पत्नीसदृशो जपः ॥ ८६ ॥
होमशून्यस्य विप्रस्य यो जपः ससुताः स्त्रियः ।
दशाक्षरं जपेन्मन्त्री सिद्धये दशलक्षकम् ॥ ८७ ॥
जप्त्वा तदन्ते होमादिविधिना कर्म चाचरेत् ।
दशाक्षरं जपेन्मन्त्री सहस्रदशकं जपेत् ॥ ८८ ॥
प्रत्यहं मुख्यकल्पोऽयमन्यन्न्यूनमुदाहृतम् ।
अष्टादशार्णं तु मनुं पञ्चलक्षं जपेत्ततः ॥ ८९ ॥
कृत्यमेवं समुद्दिष्टमन्यत्तत्कल्पसंग्रहात् ।
तर्पणं च ततः कुर्यात्तीर्थोदैश्चन्द्रमिश्रितैः ॥ ९० ॥
जलदेवं समावाह्य पाद्याद्यैरुदकात्मकैः ।
सम्पूज्य विधिवद् भक्त्या परिवारं समन्वितम् ॥ ९१ ॥
एकैकमञ्जलिं तोयं परिवारान् प्रतर्पयेत् ।
ततो होमदशांशेन तर्पयेत् पुरुषोत्तमम् ॥ ९२ ॥

आदौ मन्त्रं समुच्चार्य श्रीपूर्वं कृष्णमित्यपि ।
तर्पयाम्यहमित्युक्त्वा नमोऽन्तस्तर्पयेन्मनुः ॥ ९३ ॥
तर्पणस्य दशांशेन अभिषेकं तथा चरेत् ।
न्यासानशेषान् कृत्वा वै तद्भेदेन पूजयेत् ॥ ९४ ॥
कृष्णात्मानं स्वमात्मानं ध्यात्वा रश्मिसमन्वितम् ।
कुसुमं तोयमेकं च सुगन्धिपरिमिश्रितम् ॥ ९५ ॥
जलाञ्जलिं समादाय मूलमुच्चार्य साधकः ।
श्रीकृष्णमभिषिञ्चामि नम इत्यभिषेचने ॥ ९६ ॥
अभिषेकदशांशेन ब्राह्मणान् परितर्पयेत् ।
क्षीरखण्डाज्यभोज्यैश्च बहुमानपुरःसरम् ॥ ९७ ॥
विप्रभोजनमात्रेण व्यङ्गः साङ्गो भवेद् ध्रुवम् ।
सर्वथा भोजयेद् विप्रान् ते कृष्णतनवो यतः ॥ ९८ ॥
यत्र भुङ्क्ते श्रियः कान्तस्तत्र भुङ्क्ते जगत्त्रयम् ।
गुरवे दक्षिणां दद्याद् भोजनाच्छादनादिभिः ॥ ९९ ॥
गुरुसन्तोषमात्रेण मन्त्रसिद्धिर्भवेद् ध्रुवम् ।
एवं सिद्धमनुं मन्त्री साधयेत् सकलेप्सितम ॥ १०० ॥
एवं नित्यक्रमं कृत्वा नैमित्तिकमथाचरेत् ।
कृते नैमित्तिके विप्र नित्यस्य पूर्णता भवेत् ॥ १०१ ॥
अन्यथा नैव सिद्धिः स्यादनुष्ठानशतैरपि ।
मथुरायां महाक्षेत्रे वसन् कृष्णं समर्चयेत् ॥ १०२ ॥
लक्षमात्रं जपन्मन्त्रं मण्डलादीप्सितं भवेत् ।
मन्दरस्य महारण्ये सरलद्रुमकानने ॥ १०३ ॥
पुष्पैर्वन्यसमुद्भूतैर्दुग्धाशी विजितेन्द्रियः ।
लक्षमात्रं जपेद् भक्त्या अणिमादिगुणांल्लभेत् ॥ १०४ ॥
समुद्रगासरिन्मध्ये कुदिने निवसन् यतिः ।
दुग्धाहारो जपेल्लक्षं पापं शतभवोद्भवम् ॥ १०५ ॥
नाशयेन्नात्र सन्देहो वाक्सिद्धिं चापि विन्दति ।
पर्वताग्रे जपेत कृष्णं शाकमूलफलाशनः ॥ १०६ ॥
लक्षं तत्रापि संजप्य खेचरीमेलनं भवेत् ।
समुद्रगानदीतीरे तुलसीकानने वसन् ॥ १०७ ॥
लक्षमात्रजपात्तत्र कोटिजन्माघनाशनम् ।
पुण्डरीकवरैः कृष्णं मासमेकं समर्चयन् ॥ १०८ ॥

धर्मार्थकामोक्षाणि करस्थानि लभेद् ध्रुवम् ।
तुलास्थे भास्करे पद्मैर्होमयेद् दिक्सहस्रकम् ॥ १०९ ॥
लक्ष्मीः स्थिरा भवेत्तस्य पुत्रपौत्रानुयायिनी ।
श्रीपुष्पैर्जुहुयान्मन्त्री वैशाखे मासि दुग्धपः ॥ ११० ॥
सर्वपापक्षयकरः सर्वसिद्धि-प्रवर्द्धकः ।
वेदाः सर्वे नमस्यन्ति भक्त्या तु पुरुषर्षभम् ॥ १११ ॥
श्रीजलैस्तर्पयेत् कृष्णं मत्स्यण्डीचन्द्रसंयुतैः ।
अष्टोत्तरशतं कृत्वा पूजान्ते भक्तितत्परः ॥ ११२ ॥
मण्डलाल्लभते सिद्धिं दुष्करं सुकरं तु वा ।
यद् यत् कामयते मन्त्री अनायासाल्लभेच्च तत् ॥ ११३ ॥
दुग्धबुद्ध्या जलैर्नित्यमष्टोत्तरशतं शतम् ।
तर्पयन्नखिलान् कामांल्लभेन्मोक्षं च विन्दति ॥ ११४ ॥
कुशपुष्पैः समभ्यर्च्य मासमात्रं निरामयः ।
यशसे धर्मवृद्ध्यै च ब्रह्मचारिव्रते स्थितः ॥ ११५ ॥
हयारिकुसुमैः शुक्लैर्मण्डलाद् वाञ्छितं भवेत् ।
तथा राकाश्वमात्रेण अचलां भक्तिमाप्नुयात् ॥ ११६ ॥
तथा द्वाभ्यां समभ्यर्च्य भुक्तिं मुक्तिं च विन्दति ।
गोषु भक्तिः सदा कार्या गोषु कण्डूयनं तथा ॥ ११७ ॥
गोषु नित्यं प्रसन्नासु गोपालः संप्रसीदति ।
ब्राह्मणानां क्षत्रियाणां वैश्यानां शेषजन्मनाम् ॥ ११८ ॥
स्त्रीणां चैव महाब्रह्मो नैमित्तिकमिदं स्मृतम् ।
एतेषां चैकमात्रं तु कृत्वा काम्यानि साधयेत् ॥ ११९ ॥

इति श्रीगौतमीये महातन्त्रे चतुर्दशोऽध्यायः ॥ १४ ॥

---

## अथ पञ्चदशोऽध्यायः

त्रिकालाभ्यर्चनं वक्ष्ये गोविन्दस्य यथाविधि ।
मन्त्रयोरुभयोः कार्य्यमन्येषां च तदात्मनः ॥ १ ॥
कलायकुसुमश्यामं नीलेन्दीवरलोचनम् ।
वार्षिकं च शिशुं मुग्धमासीनं पद्मविष्टरे ॥ २ ॥
भृङ्गविद्रुमविम्बाभमकरपट्टाधरोत्तमम् ।
गुडालकचयाच्छन्नमुखेन्दुप्रहसंयुतम् ॥ ३ ॥
कुन्देन्दुकाशसंकाशहासभासितदिङ्मुखम् ।
राजद्दन्तद्वयोद्भासनिन्दितानेकमौक्तिकम् ॥ ४ ॥
महाश्मरश्मिसंकीर्णसुवर्णानेकभूषणम् ।
सुपुष्टं धूसराङ्गं च धेनुधूलिचयोत्थितम् ॥ ५ ॥
गोपगोपीगवां वृन्दैर्वीक्ष्यमाणं सुविस्मितम् ।
ब्रह्मणा शंकरेणापि प्रेमोत्कण्ठासुवीक्षितम् ॥ ६ ॥
पुरन्दरमुखैर्देवैर्मुनिभिः संस्तुतंपरम् ।
एवं ध्यात्वा जपेत् कृष्णं यजेद् भक्तिप्रधानतः ॥ ७ ॥
अङ्गैरिन्द्रादिवज्राद्यैरावृत्तित्रितयान्वितम् ।
क्षीरखण्डाज्यदुग्धं च कदलीनवनीतकम् ॥ ८ ॥
मोचारम्भाफलं चापि अन्यद् बालप्रियं च यत् ।
जपं चाष्टसहस्रं च कृत्वा कृष्णं प्रसादयेत् ॥ ९ ॥
स्तोत्रैर्नानाविधैर्भक्त्या नमस्कारप्रदक्षिणैः ।
दुग्धबुद्ध्या जलैरष्टशतं संतर्प्य मंत्रवित् ॥ १० ॥
आत्मानं तत्पदाम्भोजे ह्यनन्यः सन् समर्पयेत् ।
ब्रह्मार्पणाख्यमनुना तथोद्वास्यहृदं नयेत् ॥ ११ ॥
पूर्वोक्तेन क्रमेणाथ शेषमन्यत् समर्पयेत् ।
हुत्वा शेषं निशाशी च एकाकी च निशां नयेत् ॥ १२ ॥
य एवं मासमात्रं तु भक्त्या कृष्णं समर्चयेत् ।
पूज्यो लोकैः कविर्वाग्मी लक्ष्मीं प्राप्यानपायिनीम् ॥ १३ ॥
पुत्रैर्मित्रैश्च सम्बद्धः प्रयात्यन्ते परम्पदम् ।
मध्याह्ने वासुदेवं तं राजमण्डलमध्यगम् ॥ १४ ॥

द्वारवत्यां सहस्रार्कदीपिते भवनान्तरे ।
कल्पवृक्षसमाकीर्णे पुण्यपक्षिनिनादिते ॥ १५ ॥
पद्मोत्पलादिकह्लारैः संकीर्णैः समलङ्कृते ।
तस्मिन् सुपुलिने रम्ये छायायां कल्पकस्य च ॥ १६ ॥
रत्नस्तम्भै रत्नदीपैर्मुक्तादामविभूषिते ।
नानाविचित्रचित्रान्तर्वितानशतसंकुले ॥ १७ ॥
तत्पार्श्वे चासनं ध्यायेत् पुन्नागैर्नागकेशरैः ।
तथा नानाविधैर्वृक्षैः पाटलैश्चम्पकादिभिः ॥ १८ ॥
बकुलैश्चारलैर्वन्यैः कुरवैर्विघ्रितैरपि ।
सर्वर्तुकुसुमोपेतैः पुष्पावनतशाखिभिः ॥ १९ ॥
रत्नसिंहासनासीनं पुण्डरीकदलेक्षणम् ।
पृथूरस्कं सुपुष्टाङ्गं राजन्यगणमोहनम् ॥ २० ॥
पुण्डरीकनिभानाभिं पुण्डरीकाक्षमव्ययम् ।
शुभ्रललाटवदनं पुष्पहासं सुलोचनम् ॥ २१ ॥
सुकपोलं सुताम्रोष्ठं श्यामलं मङ्गलालयम् ।
नीलकुञ्चितकेशान्तं विचित्रवरभूषणम् ॥ २२ ॥
कम्बुग्रीवं सुविस्तीर्णकौस्तुभोद्भासिवक्षसम् ।
महाबलिं महोरस्कं महाभुजचतुष्टयम् ॥ २३ ॥
बलिबन्धुरमध्यं च राजदधरशोभितम् ।
प्रदक्षिणगतश्रीमद्वृत्तनाभिविभूषितम् ॥ २४ ॥
केयूरमणिसन्नद्धराजद्भुजचतुष्टयम् ।
विचित्रकटकैर्युक्तं नूपुरैः पादशोभितम् ॥ २५ ॥
नानारत्नमयैर्ह्रीतैरङ्गुलीयैर्विराजितम् ।
अनन्तरत्नसंछन्नस्फुरन्मकरकुण्डलम् ॥ २६ ॥
सौवर्णैर्नाभिरुचिरनानाचित्रविचित्रितैः ।
लोलभ्रमरसंछन्नैः प्रसूनैर्मुकुटोज्ज्वलम् ॥ २७ ॥
शङ्खचक्रगदापद्मधरं शान्तमुखेक्षणम् ।
दिव्यलक्षणसम्पन्नं दिव्यभूषणभूषितम् ॥ २८ ॥
दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
ललाटे हृदये कुक्षौ कण्ठे बाह्वोश्च पार्श्वयोः ॥ २९ ॥
विराजितोर्ध्वशुभ्रेण चन्दनेन विभूषितम् ।
महीभारभूताराति तर्जयन्तं मुहुर्मुहुः ॥ ३० ॥

उद्धवादिमन्त्रिवरैर्मन्त्रयन्तं मुहुर्मुहुः ।
तेषां निपातनायैव धर्मार्थनीतिसूक्तिभिः ॥ ३१ ॥
एवं मध्याह्नसंप्राप्तकाले ध्यायञ्जगद्गुरुम् ।
आवाह्य विधिवद् भक्त्या पूजयन्नुपचारकैः ॥ ३२ ॥
अङ्गं पूर्ववदुद्दिष्टं पुर आदि प्रपूजयेत् ।
रुक्मिणीं सत्यभामां च कालिन्दीं च सुलक्ष्मणाम् ॥ ३३ ॥
नाग्नजितीं जाम्बवतीं मित्रविन्दां सुशीलिकाम् ।
इत्यष्टशक्तीर्देवस्य पूज्याः कृष्णस्य वल्लभाः ॥ ३४ ॥
अग्नौ सुदर्शनं चक्रं नैरृत्ये च जलोद्भवम् ।
वायव्ये च गदां दिव्यामीशाने पद्ममुज्ज्वलम् ॥ ३५ ॥
ततो दलानां बाह्ये च वसुदेवं च देवकीम् ।
नन्दगोपं यशोदां च पुर आदि प्रपूजयेत् ॥ ३६ ॥
पाद्यैरर्घ्यैस्तथा पुष्पैः पूर्वादिदलतोऽर्चयेत् ।
बलभद्रं सुभद्रां च रोहिणीं च तथोत्तरे ॥ ३७ ॥
सुदामं च तथा दामं वसुदामं च किङ्किणीम् ।
देवस्य वामपार्श्वे तु पूजयेद् गुरुपादुकाः ॥ ३८ ॥
परमं च गुरुं तत्र परापरगुरुं तथा ।
पादुकान्तं समभ्यर्च्य पूर्वसिद्धांस्तथाचरेत् ॥ ३९ ॥
पूर्वं गणपतिं इष्ट्वा तद्बहिः परिपूजयेत् ।
इन्द्रादिलोकपालांश्च स्वस्वदिक्षु स्वमन्त्रतः ॥ ४० ॥
कुमुदं कुमुदाक्षं च पुण्डरीकं च वामनम् ।
शङ्कुकर्णं सर्वनेत्रं सुमुखं सुप्रतिष्ठितम् ॥ ४१ ॥
दक्षिणावर्त्तमेतास्तु पूर्वादिदलतोऽर्चयेत् ।
उत्तरेशानयोर्मध्ये विष्वक्सेनं समर्चयेत् ॥ ४२ ॥
संपूज्यैव हरिं भक्त्या नैवेद्यं च निवेदयेत् ।
पायसं शर्करापूरं खण्डाज्यं कदलीफलम् ॥ ४३ ॥
सितोदकं शमनं च स्वर्णपात्रे निवेदयेत् ।
अथवा रौप्यपात्रे च ताम्रपात्रेऽथवा पुनः ॥ ४४ ॥
अभावात् पद्मपत्रे वा ह्यन्यथा नरकं व्रजेत् ।
सुवर्णचषके वाऽथ रौप्ये वा विधिना ततः ॥ ४५ ॥
सशर्करं पक्वदुग्धमन्नं व्यञ्जनपायसम् ।
नानाविधोपहाराणि गोविन्दाय निवेदयेत् ॥ ४६ ॥

राजोपचारं दत्त्वाऽन्ते स्तुत्वा नत्वा विसर्जयेत् ।
य एवं पूजयेद्देवं गोपालं विगतस्पृहः ॥ ४७ ॥
राजानः किंकराः सर्वे सामान्याः सपरिच्छदाः ।
राजपुत्राश्च पत्न्यश्च सर्वे तस्यानुवर्तिनः ॥ ४८ ॥
इह भुक्त्वा वरान् भोगानन्ते विष्णोः पदं व्रजेत् ।
अष्टोत्तरशतं होमं कुर्यात तत्संख्ययाहृतः ॥ ४९ ॥
होमतर्पणयोर्मंत्री साधयेदखिलानपि ।
प्रातर्होमं प्रकुर्वीत तथा मध्यन्दिनेऽथवा ॥ ५० ॥
रात्रिहोमं च मध्याह्ने कुर्यादेवं विधिः स्मृतः ।
तृतीयकालपूजाया नास्ति कालविकल्पना ॥ ५१ ॥
सायाह्ने निशि वेत्यत्र वदन्त्येके विपश्चितः ।
अष्टादशार्णं सायाह्ने रात्रौ चेद् दशवार्णिकम् ॥ ५२ ॥
उभये उभये नैव वदन्ति ब्रह्मवादिनः ।
सायाह्ने द्वारवत्यां तु चित्रकोद्यानमध्यगः ॥ ५३ ॥
सौगन्धिकोत्पललसद्-दीर्घिकाशतवेष्टिते ।
नन्दनोद्यानमध्ये तु कदम्बवनमध्यगः ॥ ५४ ॥
ज्वलद्रत्नमयैः स्तम्भैः सुरत्नवीथिकान्विते ।
नानारत्नमयोल्लासिप्राचीरद्वारशोभिते ॥ ५५ ॥
महारत्नमयं गेहं मुनिभिः परिवेष्टितम् ।
नारदाद्यैर्मुनिवरैः शौनकैः पिप्पलादिभिः ॥ ५६ ॥
सनकादिब्रह्मपुत्रैः परीतं तत्त्वनिर्णये ।
नारदं पर्वतं जिष्णुं निशठोद्धवदारुकम् ॥ ५७ ॥
विष्वक्सेनं च सैनेयं कृपादृष्टिविलज्जितम् ।
तेभ्यो मुनिभ्यः स्वं धाम दिशन्तं परमक्षरम् ॥ ५८ ॥
चन्द्रकोटिप्रतीकाशं विश्वावासं सुदीपितम् ।
नानारत्नगणाकीर्णं महामुकुटभूषितम् ॥ ५९ ॥
अनेकरत्नसंयुक्तैर्लसन्मकरकुण्डलम् ।
तारहारावलीराजल्लसत्-कौस्तुभवक्षसम् ॥ ६० ॥
नानारत्नगणाकीर्ण-केयूरवलयाष्टकम् ।
विद्युत्-कनकाभास-पीताम्बरयुगावृतम् ॥ ६१ ॥
बन्धुरोदारजठरं गंभीरनाभिपंकजम् ।
उत्तुंगचरणाम्भोजलसत्स्वर्णाङ्गुलीयकम् ॥ ६२ ॥

प्रदीप्तरत्नकटक— तुलाकोटिद्वयान्वितम् ।
शरारक्ताधरपुटमारक्तपदपङ्कजम् ॥ ६३ ॥
शंखचक्रगदापद्मधारिणं वनमालिनम् ।
शुद्धज्ञानस्वभावत्वात् सशुक्लं तं परात् परम् ॥ ६४ ॥
अज्ञाननाशकार्थत्वान्नववारिजसन्निभम् ।
सूर्यकोटिप्रतीकाशमविद्याध्वान्तनाशनम् ॥ ६५ ॥
इत्येवं परमात्मानं ध्यायन्ति ब्रह्मवादिनः ।
एवं ध्यात्वा मध्यमार्चाविधानेन प्रपूजयेत् ॥ ६६ ॥
सहस्रैकं जपेन्मंत्रं होमाद्दशांशतर्पणम् ।
रजताराजिते पात्रे खंडदुग्धं निवेदयेत् ॥ ६७ ॥
पूर्वोपचारान् दत्त्वाथ नमस्कृत्य विसर्जयेत् ।
गृहस्थानां वनस्थानां न्यासिनां हृदयाम्बुजे ॥ ६८ ॥
ध्यात्वा संपूज्य मुनिभिर्मानसैरुपचारकैः ।
विविक्तो गृहमेधी च मुनिभिः सह पूजयेत् ॥ ६९ ॥
वसुदेवादिभिरपि निर्वाणं परमाप्नुयात् ।
सायाह्ने वासुदेवं च पूजयेद्विधिना नरः ॥ ७० ॥
देवाः सर्वे नमस्यन्ति किंपुनर्नरमर्कटाः ।
संसारसागरं घोरं विषयनक्रसंयुतम् ॥ ७१ ॥
संतीर्य्य विषयान् मुक्त्वा ज्ञानी तत्पदमाप्नुयात् ।
दुर्वासनां परित्यज्य कोटिजन्मसमुद्भवाम् ॥ ७२ ॥
एकेन जन्मना मुक्तिं याति कैवल्यनिर्मिताम् ।
तद्विष्णोः परमं पदं सदा पश्यंति सूरयः ॥ ७३ ॥
रात्रौ चेन्मदनाक्रान्तमानसं देवकीसुतम् ।
रासगोष्ठीपरिश्रान्तं गोपीमण्डलमध्यगम् ॥ ७४ ॥
वृन्दावनगतं ध्यायेच्छायायां कल्पशाखिनः ।
सुस्थितं वेणुगायन्तं वनमालापरिवृतम् ॥ ७५ ॥
गोपिकागोपसंघातैर्वेष्टितं जगतांपतिम् ।
यक्षैर्विद्याधरगणैर्विहंगैर्भूवियद्गतैः ॥ ७६ ॥
ब्रह्मर्षिभिर्देवर्षिभिः स्तूयमानं सुविस्मितैः ।
नानाविधैरप्सरोभिर्वीक्ष्यमाणं सुविस्मितैः ॥ ७७ ॥
लेलिह्यमानं प्रणयाद्देवैस्त्रिंशत्कोटिभिः ।
इन्दीवरनिभं रत्नसुन्दरेन्दुवराननम् ॥ ७८ ॥

संफुल्लपद्मवदनं पद्मपत्रनिभेक्षणम् ।
पद्मनाभिपाणिपादं पद्मरागनिभाम्बरम् ॥ ७६ ॥
शरणं सर्वभूतानां गोपिकास्तनवल्लभम् ।
क्वचिच्छंकुपरिमिलत्पंकजोपरिसंस्थितम् ॥ ८० ॥
कल्पितानेकदेहेन नारीणां शतकोटिभिः ।
वेष्टितं रममाणं च गायन्तं दिव्यमूर्च्छनैः ॥ ८१ ॥
द्वाभ्यां द्वाभ्यां वल्लभाभ्यां मध्ये मध्ये विराजितम् ।
यथा मरकतस्तम्भं सुवर्णेनाभिवेष्टितम् ॥ ८२ ॥
क्वचिद् गोपाङ्गनावस्त्रहारिणं हेलयान्वितम् ।
क्वचिद्धसन्तं हासयन्तं स्त्रीवृन्दमुपहासकैः ॥ ८३ ॥
विस्मितैर्देवनिकरैरर्चितं पुष्पवृष्टिभिः ।
देवस्त्रीभिर्वीक्ष्यमाणं कामोत्कण्ठितचेष्टितैः ॥ ८४ ॥
एवं ध्यात्वा मधुरिपुं यजेत्तं संशितव्रतः ।
मिथुनैस्तु षोडशकैः केशवादिभिरावृतम् ॥ ८५ ॥
महर्षिभिस्तथा वीतं गोपीभिरपि सर्वतः ।
एवमभ्यर्च्य विधिना कांस्ये वा रजतान्विते ॥ ८६ ॥
पात्रे दुग्धं निवेद्याथ मिथुनेभ्यस्तथार्पयेत् ।
जप्त्वा स्तुत्वा नमस्कृत्य हृत्पद्मे तं विसर्जयेत् ॥ ८७ ॥
एवमभ्यर्च्य जगतां पतिं शुद्धमना यतः ।
धर्मार्थकाममोक्षाणां दायादो भवति ध्रुवम् ॥ ८८ ॥
विप्रो वेदाधिपो भूयात् साक्षाद् भूमिपुरंदरः ।
क्षत्रियो राजवर्य्यश्च वैश्यो धनसमृद्धिमान् ॥ ८६ ॥
शूद्रः सुखानि सर्वाणि भुक्त्वा चान्ते परं व्रजेत् ।
एवं ते कथितं विप्र संसारभयनाशनम् ॥ ६० ॥
अर्चनं त्रिविधं यत्ते मूलाविद्यानिकृन्तनम् ॥ ६१ ॥

इति श्रीगौतमीये महातन्त्रे सर्वोत्तमोत्तमे पञ्चदशोऽध्यायः ॥ १५ ॥

# अथ षोडशोऽध्यायः

गौतम उवाच—

ब्रूहि मे बालकृष्णं त्वं तत्त्वसार्वज्ञकारणात् ।
ब्रह्मणा यत् पुरा प्रोक्तं सेवया तपसोर्जितः ॥ १ ॥
यत्प्रसादान्मुनिश्रेष्ठ त्रैलोक्ये विदितं तु ते ।
यथाक्रमं कथय मे सर्वमेव समाहितः ॥ २ ॥
शुश्रूषा मे बलवती गोपालस्यार्चनं प्रति ।

नारद उवाच—

बाल्यं ते कथयाम्यद्य देवस्य परमाद्भुतम् ॥ ३ ॥
गोपनीयं न ते किंचित्त्वं हि वेदविदांवर ।
तपसाऽकल्मषमनाः कृष्णे भक्तोऽसि निश्चयात् ॥ ४ ॥
तारः प्रजापतिः शक्रो माया च बिन्दुरेव च ।
एतन्मंत्रवरं विद्धि रहस्यं परमाद्भुतम् ॥ ५ ॥
महाचमत्कारकरं रिपुक्षोभणकारकम् ।
चतुर्वर्गफलं चार्च्यं जपमात्रेण सिद्ध्यति ॥ ६ ॥
गोपालस्यापि वै मंत्रा वक्ष्यन्तेऽत्रैव ते मया ।
संदीपितमनेनैव फलप्रदमवेक्षताम् ॥ ७ ॥
चूडामणिरयं प्रोक्तो देवस्य शिशुरूपिणः ।
अहं मुनिः समाख्यातो गायत्री छन्द उच्यते ॥ ८ ॥
देवता कथितः कृष्णः सर्वकामफलप्रदः ।
समाहारोच्चारणोऽयं मध्यमस्वर ईरितः ॥ ९ ॥
नेत्राब्धितर्कसूर्य्येन्द्रैः कलवर्णविभेदकैः ।
पञ्चाङ्गानि मनोः कृत्वा ध्यानं कुर्य्यात् समाहितः ॥ १० ॥
मथुरायाः पुरे ध्यायेत् कंसस्यान्तःपुराजिरे ।
सूतिकागृहमध्यस्थं जातमात्रं जगत्पतिम् ॥ ११ ॥
सिद्धचारणगन्धर्वदेवदानवकिंनरैः ।
यक्षराक्षसवेतालैः खेचरैर्दिक्चरैरपि ॥ १२ ॥

विद्याधरीभिर्देवीभिः किंनरीभिः समन्ततः।
ब्रह्मणा तनयैः सार्द्धं वीक्ष्यमाणं मुदान्वितैः॥ १३॥
इन्द्रादिभिश्च दिक्पालैर्लसत्कुसुमवर्षणैः।
चतुर्भुजं शङ्खचक्रगदाशार्ङ्गधरं हरिम्॥ १४॥
दक्षस्योर्ध्वे स्मरेच्चक्रं गदां च तदधः करे।
वामस्योर्ध्वे शार्ङ्गधनुः शङ्खं च तदधः करे॥ १५॥
नवीनजलदश्यामं पीतकौशेयवाससम्।
विलसत्-कुन्तलाभोगभास्वरे निजमूर्द्धनि॥ १६॥
विहिताशेषसद्रत्नशोभिस्वर्णकिरीटिनम्।
सुगन्धिपारिजातैश्च शोभिताशेषकुन्तलम्॥ १७॥
ललाटे न्यस्तकस्तूरीतिलकोज्ज्वलशोभितम्।
अष्टमीचन्द्रशकलभासिभालतलोज्ज्वलम्॥ १८॥
उत्फुल्लपुण्डरीकश्रीनयनद्वयभासितम्।
मनोभवधनुःकल्पचिल्लचापविराजितम्॥ १९॥
दाडिमीबीजकुन्दाभदन्तपंक्तिमनोहरम्।
पक्वबिम्बफलोद्भासि-दन्तवासोज्ज्वलं विधुम्॥ २०॥
भास्वदनेकरत्नश्रीस्फुरन्मकरकुण्डलम्।
महामरकतस्तम्भभासमानभुजोत्करम्॥ २१॥
रत्नचामीकराभोगैरंगदैर्वलयैर्युतम्।
कम्बुग्रीवं महोरस्कं मुक्ताहारविराजितम्॥ २२॥
श्रीवत्सलाञ्छनं भ्राजत्कौस्तुभोज्ज्वलवक्षसम्।
रत्नवैदूर्यघटितं-किंकिणीजालमालिना॥ २३॥
पट्टसूत्रेण संबद्धमध्यदेशोपशोभितम्।
रत्नमंजीरफलक— मञ्जुश्रीपादपल्लवम्॥ २४॥
देवक्या वसुदेवेन हरेण विधिना तथा।
विदिक्षु तिष्ठता स्तोत्रसुस्वरेण पुटाञ्जलिम्॥ २५॥
मेरुशृङ्गप्रतीकाशं गरुडोपरि संस्थितम्।
इति ध्यात्वा परात्मानं गुरुमात्मानमेव च॥ २६॥
एकीभावेन संभाव्य ततः पूजनमारभेत्।
कर्पूरमिलितालोलसितचन्दनचर्चितम्॥ २७॥
आलिखेद्देवकीपुत्रं पत्रशोभनरेखया।
शलाकया वैद्रुमया तथा चापि च हैमया॥ २८॥

किञ्जल्करूपकं वृत्तं ततो लेख्यं चतुर्दलम् ।
ततो वृत्तं चाष्टदलं लिखेद्दशदलं ततः ॥ २९ ॥
समरेखं चतुष्कोणचतुर्द्वारसुशोभितम् ।
बीजशोभिचतुर्द्वारचतुष्कोणविराजितम् ॥ ३० ॥
मध्ये संपूज्य देवेशं पूजयेत्तु चतुर्दले ।
ऐशान्यामीश्वरं देवमाग्नेय्यां च पितामहम् ॥ ३१ ॥
नैर्ऋत्यां वसुदेवं च वायव्यां देवकीमपि ।
ततश्चाष्टसु पत्रेषु पूजयेद् देववल्लभाः ॥ ३२ ॥
मुक्ताम्बरधराः सौम्याः कराम्बुजधृताम्बुजाः ।
सर्वालंकरणोद्दीप्ता लसद्यौवनविभ्रमाः ॥ ३३ ॥
श्रीमद्देवमुखाम्भोजन्यस्तनेत्रमधुव्रताः ।
स्ततो दशदले पूज्या लोकपालास्ततो बहिः ॥ ३४ ॥
गरुडं पश्चिमे द्वारे जयं पूर्वे प्रपूजयेत् ।
विजयं दक्षिणे तद्वन्नारदं च तथोत्तरे ॥ ३५ ॥
पुटाञ्जलिकराः सर्वे सुस्तोत्रमुखरा अपि ।
विलसद्वनमालाश्च पीतकौशेयवाससः ॥ ३६ ॥
ततः शंखं च चक्रं च गदां कौमोदकीमपि ।
शार्ङ्गं धनुश्च संपूज्य तद्बाह्ये पूजयेदपि ॥ ३७ ॥
ऐरावतादीनभ्यर्च्य गणानष्टौ ततो बहिः ।
कृते लक्षं जपेन्मन्त्रं त्रेतायां द्विगुणं तथा ॥ ३८ ॥
त्रिलक्षं द्वापरे जप्याच्चतुर्लक्षं कलौ जपेत् ।
लक्ष्मीप्रसूनैर्जुहुयाच्छ्रियमिच्छन्ननिन्दिताम् ॥ ३९ ॥
आज्येनानेन जुहुयादाज्यान्नस्य समृद्धये ।
आरण्यैः कुसुमैर्विप्रान् जातीभिः पृथिवीपतीन् ॥ ४० ॥
प्रसूनैरसितैर्वैश्यान् शूद्रान्नीलोत्पलैरपि ।
वशेयुर्लवणैस्सर्वान् पङ्कजैर्वनिताजनान् ॥ ४१ ॥
गोशालासु कृतो होमः पायसेन ससर्पिषा ।
गवां शान्ति करोत्याशु गोविन्दो गोकुलप्रियः ॥ ४२ ॥
शिशुवेषधरं देवम् किंकिणीजालशोभितम् ।
स्मृत्वा प्रतर्पयेन्मन्त्री दुग्धबुद्ध्या शुभैर्जलैः ॥ ४३ ॥
धनम् धान्यांशुकादीनि प्रीतस्तस्मै ददाति सः ।
पिण्डमूलेन दहनम् पुरयुगे कोणराजसा ॥ ४४ ॥

पाशांकुशाभ्यामावीतं क्षोणीपुरयुगान्वितम् ।
अष्टाक्षरेण संवीतं यन्त्रं गोविन्ददैवतम् ॥ ४५ ॥

धमार्थकामफलदं सर्वरक्षाकरं स्मृतम् ।
पञ्चान्तक-धरासंस्थ-मनुबिन्दुविभूपितम् ॥ ४६ ॥

पिण्डबीजमिदं प्रोक्तं सर्वसिद्धिकरं परम् ।
चतुर्लक्षं जपेत्तत्र दशांशमिति च क्रमात् ॥ ४७ ॥

गणेशं भास्करं रुद्रं गौरीं च परिपूजयेत् ।
विदिक्षु यन्त्रराजस्य स्वस्वमन्त्रपुरःसरम् ॥ ४८ ॥

एतद्धारणमात्रेण त्रिकालज्ञो भवेद् ध्रुवम् ।
यद्यन्निजेप्सितं सर्वं साधयेन्नात्र संशयः ॥ ४९ ॥

अनेन सदृशो मन्त्रो यन्त्रं वापि न विद्यते ।
केवलं प्रेमभावेन कथितं त्वयि सुव्रत ॥ ५० ॥

इति श्रीगौतमीये महातन्त्रे सर्वोत्तमोत्तमे षोडशोऽध्यायः ॥ १६ ॥

---

# अथ सप्तदशोऽध्यायः

अथ प्रयोगान् वक्ष्यामि मन्त्रयोरुभयोः समान्।
यान् कृत्वा साधकवरो लोकद्वयसुपूजितः॥ १॥
तदर्थकारिमन्त्रान् वै वक्ष्यामि च क्वचित् क्वचित्।
वन्दे तं देवकीपुत्रं सद्योजातं सुसत्प्रभम्॥ २॥
शङ्खचक्रगदापद्मधारिणं वनमालिनम्।
एवं ध्यात्वा मधुरिपुं लक्षं ब्राह्मे मुहूर्तके॥ ३॥
जप्त्वा मेधां वरां प्राप्य कवीनामग्रणीर्भवेत्।
अथवा स्फटिकाभासं द्विभुजं लेखपुस्तकम्॥ ४॥
धारिणं तं विचिन्त्याथ लक्षं ब्राह्मे मुहूर्तके।
जप्त्वा मन्त्री त्रिकालज्ञो बृहस्पतिसमो भवेत्॥ ५॥
अथ वैष महामन्त्रः प्रोच्यते शृणु तत्त्वतः।
श्यामलं कोमलं बालं क्रीडन्तं मातुरङ्कके॥ ६॥
द्विभुजं स्तनपातारं चिन्तयन् श्रुतिधृग् भवेत्।
लक्षं वा प्रजपेदेनं समानं लभते फलम्॥ ७॥
कामबीजादिमन्त्रोऽयं किं न सिद्ध्यति भूतले।
उपसंहृतदिव्याङ्गं पुरेव मातुरङ्कके॥ ८॥
चलत्पद्मपदं बालं ध्यायन् ब्राह्मे मुहूर्तके।
जप्त्वा मनुवरं विद्वान् सर्वशास्त्रार्थविद् भवेत्॥ ९॥
सर्ववेदार्थकुशलो ज्ञानवान् भवति ध्रुवम्।
नन्दांगणे पर्य्यटन्तं धूलीनिचयधूसरम्॥ १०॥
प्रदीप्तमणिभिर्दीप्तं यशोदालोकनोत्सुकम्।
एवं ध्यात्वा मनुवरं जपेन्नियममास्थितः॥ ११॥
लक्षैकजपनादस्य किन्न सिद्ध्यति भूतले।
प्रातः प्रातः पिबेत्तोयमष्टोत्तरशतं जपेत्॥ १२॥
अनेन मूको दुष्टात्मा जडः पाषाणवत्तथा।
अनेन जलपानेन साक्षाद्वाक्पतिसन्निभः॥ १३॥
जायते नात्र सन्देहः सत्यं सत्यं न चान्यथा।
पद्भ्यां विक्षिप्य शकटं रुदन्तं प्राकृतं यथा॥ १४॥

लक्षं जपेदिति ध्यात्वा आपद्भ्यो मुच्यते ध्रुवम् ।
शत्रुभ्यो न भयं तस्य राजतो दस्युतोपि वा ॥ १५ ॥
न तस्य विद्यते प्रीतिः कदाचिदपि सुव्रत ।
अथापरं प्रवक्ष्यामि रहस्यं सुरपूजितम् ॥ १६ ॥
यज्ज्ञात्वा साधकवरः प्रयोगफलमाप्नुयात् ।
ब्रह्माणं सोमसंयुक्तमिन्दुबिन्दुसमन्वितम् ॥ १७ ॥
दौर्गबीजमिति ख्यातं समस्तापन्निवारणम् ।
शंभोः पदं वह्नियुतं मायाबिन्दुसमन्वितम् ॥ १८ ॥
अशेषजगतो बीजं महामायेतिविश्रुतम् ।
अनया योगतो मन्त्री ह्यसाध्यमपि साधयेत् ॥ १९ ॥
वान्तं वह्निसमायुक्तं चतुर्थस्वरभूषितम् ।
श्रियो बीजमिति प्रोक्तं नृणां सर्वसुखप्रदम् ॥ २० ॥
विरञ्चीन्द्रसमायुक्तं चतुर्थस्वरभूषितम् ।
नादबिन्दुकलाक्रान्तं बीजं त्रैलोक्यमोहनम् ॥ २१ ॥
प्रोक्तं सप्ताक्षरं तंतुपष्ठस्वरसमन्वितम् ।
नादबिन्दुकलायुक्तं कूर्चबीजमिति स्मृतम् ॥ २२ ॥
एतेषां बीजवर्गाणां ज्ञात्वा कर्माणि मन्त्रवित् ।
गुरुतः शास्त्रतः सम्यक् सर्वकर्माणि साधयेत् ॥ २३ ॥
अन्यथा नैव सिद्धः स्यान्मन्त्रः कल्पशतैरपि ।
मेरुश्चतुर्दशस्वरमधोवह्निसमन्वितः ॥ २४ ॥
नृसिंहबीजमित्युक्तं सर्वापस्मारनाशनम् ।
समाहितमना भूत्वा पद्माक्षैः कृतमालया ॥ २५ ॥
अयुतैकं जपेन्मन्त्रं ब्रह्मचारिव्रते स्थितः ।
अल्पायासेन कामाः स्युर्दरिद्रश्च न जायते ॥ २६ ॥
सर्वे मनोरथास्तस्य सिध्यन्ति च न संशयः ।
नित्यकर्मरतं कृष्णं वन्यपुष्पैः समर्च्चयेत् ॥ २७ ॥
वश्या भवन्ति सर्वे च ब्राह्मणा नात्र संशयः ।
गोपालवेषं मनसा जातिपुष्पैः समर्चयेत् ॥ २८ ॥
वश्या भवन्ति राजानो नात्र कार्य्या विचारणा ।
तमेव रक्तपुष्पैस्तु वैश्या वश्या भवन्ति हि ॥ २९ ॥
नीलोत्पलैश्च शूद्राः स्युर्मासं कृष्णं समर्चयेत् ।
जुहुयाद् रक्तकुसुमैर्मिश्रितैस्तिलतण्डुलैः ॥ ३० ॥

मन्त्रेणाष्टसहस्रं तु जप्त्वा भस्म धरेद्यदि ।
ललाटे विधृते तस्य सर्वे वश्या भवन्ति हि ॥ ३१ ॥
अनेन च शरीरेण राजानो वश्यतामियुः ।
स्त्रियो वश्या भवन्त्यस्य पुत्रामात्याश्च सर्वथा ॥ ३२ ॥
विवाहार्थो जपेन्मन्त्रं मासमष्टसहस्रकम् ।
रासमण्डलमध्यस्थं कृष्णं ध्यात्वा व्रजे स्थितम् ॥ ३३ ॥
विवाहयेदुत्तमां तां कन्यां सर्वकुलोज्ज्वलाम् ।
पुत्रं मे रक्ष रक्षेति द्विजेन प्रार्थितो हरिः ॥ ३४ ॥
हृतपुत्रं समाहृत्य ददौ यस्तं विचिन्तयेत् ।
पुत्रकामो लभेत् पुत्रं मासेनैकेन सुन्दरम् ॥ ३५ ॥
दीर्घायुरप्रतिहतबलवीर्यसमन्वितम् ।
कुन्दपुष्पैः समाराध्य कृष्णं ध्यायेच्च कन्यका ॥ ३६ ॥
मासद्वयं तथा मन्त्रं जपेदष्टसहस्रकम् ।
मनोरथपतिं लब्धा दीर्घकालं च क्रीडति ॥ ३७ ॥
अञ्जनं वस्त्रकुसुमं ताम्बूलं चन्दनं तथा ।
अन्यान्यान्युपभोग्यानि स्पृष्ट्वा मन्त्रशतं जपेत् ॥ ३८ ॥
दीयते यस्य यस्येति सोऽचिराद् दासवद् वशी ।
स्त्रियो वश्या अनेनैव भवन्ति मुनिसत्तम ॥ ३९ ॥
पुरुषं वशयेन्नारी अनेनैव विधानतः ।
अर्थार्थकामः श्रीपुष्पैः सिततण्डुलमिश्रितैः ॥ ४० ॥
अष्टोत्तरसहस्रं तु जुहुयादर्थवान् भवेत् ।
विश्वरूपधरं ध्यात्वा शतमष्टोत्तरं जपेत् ॥ ४१ ॥
समाहितमना मन्त्री यशस्वी कीर्तिमाप्नुयात् ।
प्रेतभूतपिशाचैश्च स्कन्दादिग्रहपीडितैः ॥ ४२ ॥
पूतनास्तनपातारं ध्यात्वा मन्त्रशतं जपेत् ।
प्रणश्यन्ति ग्रहा दुष्टाः पलायन्त इतस्ततः ॥ ४३ ॥
सर्पमण्डलिदष्टाश्च मूषिकाद्यैश्च दंशितान् ।
कृष्णं कालीयदमनं चिन्तयित्वा जपेन्नरः ॥ ४४ ॥
तर्जयन्तं विषं घोरं हूंकारेण विनाशयेत् ।
अत्रान्यान्यं मनुं हूंबीजाद्यं मे शृणु तत्त्वतः ॥ ४५ ॥
कालीयस्य फणामध्ये दिव्यं नृत्यं करोति तम् ।
नमामि देवकीपुत्रं नृत्यराजानमच्युतम् ॥ ४६ ॥

ज्वरार्त्तोऽभ्यर्च्चयेन्मंत्री जपेदष्टशतं तथा।
ज्वरेण संस्तुतं कृष्णं बलप्रद्युम्नसंयुतम्॥ ४७॥
दहन्तं बाणनगरीं गरुडोपरि संस्थितम्।
निजज्वरेण-संपिष्टं ध्यात्वा तं नाशयेत् क्षणात्॥ ४८॥
शीतलाकामलादीनि तथा चातुर्थिकोद्भवान्।
प्लीहगुल्मयकृद्वायुमपस्मारभवन्तथा॥ ४९॥
नाशयेन्नात्र सन्देहो दृष्टिमात्रेण मान्त्रिकः।
गोपाले यष्टिपाशं च वेणुमादाय संस्थितम्॥ ५०॥
गोवर्द्धनधरं कृष्णं ध्यात्वा मन्त्रं जपेन्नरः।
वातवर्षादिभिर्घोरैर्भये सम्यगुपस्थिते॥ ५१॥
भयमाशु विनश्येत नात्र कार्य्या विचारणा।
वृन्दावनगतं कृष्णं वृष्टिकामो विचिन्तयन्॥ ५२॥
जपेदष्टसहस्रं तु वृष्टिमाप्नोत्यसंशयम्।
एवं च मनसा ध्यात्वा वृष्टिं वर्षासु नाऽऽवहेत्॥ ५३॥
एवं जलाशये ध्यात्वा जपेदष्टसहस्रकम्।
वृष्टिर्भवत्यकालेऽपि महती नात्र संशयः॥ ५४॥
गायन्तं वेणुना कृष्णं गानकामो विचिन्तयेत्।
आज्यमष्टशतं हुत्वा किन्नरैरिह गीयते॥ ५५॥
जयकामो जपेद्यस्तु हरन्तं कल्पकद्रुमम्।
संस्तुतं देवताभिश्च गरुडारूढमच्युतम्॥ ५६॥
ध्यात्वा रक्तकरवीरसमिद्भिर्जुहुयाद् वशी।
अष्टोत्तरसहस्रं तु तत्क्षणान्नाशयेद् ध्रुवम्॥ ५७॥
नीलोत्पलादिभिः पुष्पैरष्टोत्तरसहस्रकम्।
शंखादिनिधिसंयुक्तं द्वारकामध्यगं हरिम्॥ ५८॥
ध्यात्वा तण्डुलदूर्वाभिर्हुत्वा शान्तिकमावहेत्।
कदम्बमूले गायन्तं कदम्बवनमालिनम्॥ ५९॥
कदम्बपुष्पैः संस्पृष्टं चिन्तयित्वा जनार्दनम्।
अपामार्गशतैर्हुत्वा जपेदष्टसहस्रकम्॥ ६०॥
सर्वलोकान् वशीकृत्य आशु विज्ञो भविष्यति।
राजद्वारे सभायां च व्यवहारे च मन्त्रवित्॥ ६१॥
मन्त्रमष्टशतं जप्त्वा प्रथमं वाक्यमुच्चरेत्।
अनेनैव विधानेन सर्वत्र विजयी भवेत्॥ ६२॥

मोक्षकामो जपेद्यस्तु पुण्डरीकाक्षमव्ययम् ।
सनकाद्यैः स्तुतं कृष्णं शुक्लाम्बरधरं परम् ॥ ६३ ॥
शंखचक्रधरं ध्यात्वा मंत्रं लक्षं जपेन्नरः ।
ताराभ्यां पुटितं कृत्वा विधिव स्थानमाश्रितः ॥ ६४ ॥
चन्द्रार्कमण्डले कृष्णं पूजयन् भक्तिमावहन् ।
संसारसागरात् सद्यो मुच्यते नात्र संशयः ॥ ६५ ॥
य इच्छेद् ब्राह्मणो मन्त्री वशीकर्तुं जगत्त्रयम् ।
वन्यैर्मनोहरैः पुष्पैर्वेणुं गायन्तमच्युतम् ॥ ६६ ॥
ध्यात्वा सम्पूज्य विधिवल्लक्षमेकं सहोमकम् ।
जप्त्वा समस्तलोकानां प्रियो• भवति नान्यथा ॥ ६७ ॥
देवोपमं सुखं भुक्त्वा याति विष्णुं तनुं त्यजन् ।
अर्चयेन्मनसा कृष्णं सहस्रं प्रत्यहं जपेत् ॥ ६८ ॥
वत्सराल्लभते मोक्षं यद् गत्वा न निवर्तते ।
वर्णिनां च गृहस्थानां न्यासिनामप्ययं विधिः ॥ ६९ ॥
मेधाकामो हुनेदग्नौ पालाशैराज्यमिश्रितैः ।
समिद्भिः पूर्ववद्धुत्वा मेधा स्यादतिमानुषी ॥ ७० ॥
वाचमिच्छँल्लभेद्वाचं ब्राह्मे जप्त्वा मुहूर्तके ।
शतं शतं च षण्मासं वाग्मी चापि सुधीर्भवेत् ॥ ७१ ॥
शत्रूणां जयकामस्तु पारिजातहरं हरिम् ।
गरुडारोहणं ध्यात्वा जिताशेषदिवौकसम् ॥ ७२ ॥
समिद्भिश्चापि जुहुयात् करवीरसमुद्भवैः ।
लक्षं जप्त्वा तथा लक्षं जुहुयान्मन्त्रवित्तमः ॥ ७३ ॥
जित्वा शत्रुगणानेताननाक्रान्तो यथाविधि ।
प्रतिष्ठां कारयेद्यस्तु भगवन्तं विचिन्त्य च ॥ ७४ ॥
शङ्खपद्मनिधियुक्तं वसन्तं द्वारकापुरीम् ।
ध्यात्वा तिलाज्यकरणान् जुहुयात्त सिततण्डुलान् ॥ ७५ ॥
अष्टोत्तरसहस्रं वै प्रतिष्ठां लभते ध्रुवम् ।
सर्वाल्लोकान् वशीकर्तुं कामो यः पंकजासने ॥ ७६ ॥
कदम्बमालया नित्यं भगवन्तमलंकृतम् ।
सनकाद्यैः प्रार्थ्यमानं योगिभिर्गोपवेषकम् ॥ ७७ ॥
विचित्रपुष्पमालाभिर्भूषितं वनमालया ।
कदम्बमूले गायन्तं चिन्तयेत् सर्वनायकम् ॥ ७८ ॥

समिद्भिरप्यपामार्गैरष्टोत्तरसहस्रकम् ।
मध्वाज्ययुक्तैर्जुहुयात् सर्वलोको वशे भवेत् ॥ ७९ ॥
मुमुक्षुभिर्भगवन्तं पुण्डरीकदलेक्षणम् ।
सनकाद्यैश्चिन्त्यमानं सिद्धैरन्यैश्च योगिभिः ॥ ८० ॥
ब्रह्मेन्द्रशंकरमुखैर्गणैश्चापि दिवौकसाम् ।
प्रह्लादप्रमुखैर्भक्तैरन्यैश्चापि महात्मभिः ॥ ८१ ॥
हृत्पद्मकर्णिकोत्तुङ्गदिव्यसिंहासनोपरि ।
ध्यात्वैवं परमात्मानं यशोदानन्दवर्द्धनम् ॥ ८२ ॥
पलाशतुलसीपत्रैः सौवर्णकुसुमैः शुभैः ।
मानसैर्वा यथा शक्त्या अर्चयेत् पुरुषोत्तमम् ॥ ८३ ॥
आत्मानं देवकीपुत्रं लीलायष्टिधरं स्मरेत् ।
यद्यन् कामयते मन्त्री तत्तदाप्नोत्ययत्नतः ॥ ८४ ॥
अनेन विधिना सर्वं साधयेत् प्रियमात्मनः ।
योजयेच्च चतुर्थेन विष्णोश्चैव तु बुद्धिमान् ॥ ८५ ॥
तृतीयमष्टमं विद्याद् ब्रह्मणा विष्णुना सह ॥ ८६ ॥

इति श्रीगौतमीये महातंत्रे सर्वोत्तमोत्तमे सप्तदशोऽध्यायः ॥ १७ ॥



# अथ अष्टादशोऽध्यायः

अथापरान् प्रवक्ष्यामि प्रयोगान् भुवि दुर्लभान् ।
यत् कृत्वा मानवः सम्यक् सद्यो देवत्वमृच्छति ॥ १ ॥
नासाध्यं विद्यते तस्य भुवि स्वर्गे रसातले ।
निशातशरनिर्भिन्नभीष्मतापहरं हरिम् ॥ २ ॥
दृष्ट्वा पीयूषवर्षिण्या कारुण्यात्तं विलोकयन् ।
एवं ध्यात्वायुतजपादसाध्यज्वरनाशनम् ॥ ३ ॥
मूर्च्छादाहगदस्फोटविषकीटसमुद्भवम् ।
नाशयेद् दाहमचिरादमृतादशशतं हुनेत् ॥ ४ ॥
काशिराजेन प्रहितां कृत्यां तां द्वारकापुरीम् ।
निजारिणा तां छित्त्वा तत्पुरीं तु चक्रतेजसा ॥ ५ ॥
दहन्तं तं हरिं स्मृत्वा जपेदयुतमादरात् ।
स्वस्नेहाक्तैः सर्षपैश्च हुनेद्रात्रौ तथाऽयुतम् ॥ ६ ॥
कृत्याः परेरितास्तं तु न ग्रसन्ति कदाचन ।
डाकिनीपूतनाकृत्यायक्षपन्नगराक्षसाः ॥ ७ ॥
अन्ये वै क्रूरसत्त्वाश्च प्रयोगाज्जपहोमयोः ।
देशाद्देशान्तरं यान्ति सर्वथा हिंसितुं न ते ॥ ८ ॥
ध्यात्वा विश्वेश्वरं देवं व्याप्तविश्वावकाशकम् ।
सूर्य्यकोटिप्रतीकाशं चन्द्रकोटिसुशीतलम् ॥ ९ ॥
एवं ध्यात्वा च मतिमाँल्लक्षमेकं जपेन्मनुम् ।
जुहुयादयुतं भक्त्या शतवीर्याङ्कुरत्रिकैः ॥ १० ॥
अकालमृत्युनाशाय सत्यमेतत् परं पदम् ।
मृत्युञ्जयं हरिं ध्यात्वा सर्वपापैर्विमुच्यते ॥ ११ ॥
आसीनमाश्रमे दिव्ये बदरीखण्डमण्डिते ।
स्पृशन् बृहद्भ्यां हस्ताभ्यां घण्टाकर्णकलेवरम् ॥ १२ ॥
एवं ध्यात्वा जपेन्मासमष्टोत्तरसहस्रकम् ।
समस्तविपदां मन्त्री प्रशमाय शमाय च ॥ १३ ॥
समता सर्वभूतेषु आशुनिर्वाणदायिनी ।
निशीथे रथमारूढं तर्जयन्तं मुहुर्मुहुः ॥ १४ ॥

धावमानं रिपुगणमनुधावन्तमच्युतम् ।
विसृजद्बाणसंघेन नयन्तं दूरदेशतः ॥ १५ ॥
उच्चाटनं भवेत् सद्यो रिपूणां लक्षजापतः ।
द्वेपयन्तं रुक्मिबलौ पाण्ड्यमध्यस्थितं हरिम् ॥ १६ ॥
ध्यात्वा लक्षं मनुवरं थिम्बस्नेहविमिश्रितम् ।
तदन्ते जुहुयान्मन्त्री गुलिका गोमयोद्भवाः ॥ १७ ॥
एवं प्रयोगमात्रेण वैरस्यं जायते मिथः ।
अन्योन्यकलहेनैव देशाद् देशान्तरं व्रजेत् ॥ १८ ॥
विद्विष्टस्तत्र तत्रापि काकवत् पर्यटन्महीम् ।
पार्थे दिशन्तं गीतार्थं रथस्थं मधुसूदनम् ॥ १९ ॥
राजमण्डलमध्यस्थं सूर्यचन्द्रायुतप्रभम् ।
ध्यात्वाऽयुतं मनुवरं शमाय प्रजपेत् सुधीः ॥ २० ॥
अनेन जपमात्रेण किं न सिध्यति भूतले ।
स्थाने हृषीकेशेत्यादिसूक्त वाचार्जुनर्षिकम् ॥ २१ ॥
गायत्रीछन्दोयलितं विश्वात्मा विश्वदैवतम् ।
सपर्य्या पूर्ववत् प्रोक्ता साधयेत् सकलेप्सितम ॥ २२ ॥
श्रीमायाद्यो जपेन्मन्त्रवरौ ध्यात्वा च पूर्ववत् ।
लक्षैकजपमात्रेण कुबेर इव मोदते ॥ २३ ॥
अन्नं दैवतगोपालं वक्ष्येऽन्यं शृणु तत्त्वतः ।
अन्नरूपः सरूपस्तुष्टिरूपप्रदोपरि ॥ २४ ॥
अन्नाधिपतये स्वाहा सोऽयमन्नाधिपो मनुः ।
श्रीबीजाद्यो मनुः प्रोक्तो ह्यन्नरत्नसमृद्धिदः ॥ २५ ॥
आचक्रांगक्लृप्तिः स्यान्नारदोऽस्य मुनिः स्मृतः ।
गायत्रीछन्द इत्युक्तं देवोऽत्रान्नप्रदो हरिः ॥ २६ ॥
ध्यानार्चनादिकं सर्वमस्य पूर्ववदाचरेत् ।
य एनं पूजयेन्मत्रं स तु सर्वसमृद्धिमान् ॥ २७ ॥
आहृत्य स्वर्णपात्रं च क्षालितं शुद्धवारिणा ।
विलिप्तगन्धपङ्केन लिखेदष्टदलाम्बुजम् ॥ २८ ॥
कर्णिकायां लिखेद्वह्नेः पुटितं मण्डलद्वयम् ।
तन्मध्ये विलिखेत् कामं सन्ध्याख्यं कर्मसंयुतम् ॥ २९ ॥
ततः शिष्टैर्मनोर्वर्णैस्तं कामं वेष्टयेत् सुधीः ।
श्रियं षट्कोणकोणानामिन्द्रनैर्ऋत्ययायुपु ॥ ३० ॥

आलिख्य च लिखेन्मायां वह्निवारुणशूलिषु ।
अक्षरैः कामगायत्र्या वेष्टयेत् केसरेषु च ॥ ३१ ॥
काममालामनोर्वर्णैर्दलेष्वष्टसु मन्त्रवित् ।
लिखेद् गृहानने वर्णमातृकां तद्बहिर्लिखेत् ॥ ३२ ॥
भूबिम्बं च लिखेद् बाह्ये श्रीमायेतिदिविष्वपि ।
यन्त्रमेवं समालिख्य जातरूपमये पटे ॥ ३३ ॥
राजते ताम्रपात्रे वा भूर्जक्षौममयेऽपि वा ।
सूक्ष्मतन्तुमये वापि प्रतिष्ठाप्य समीरणम् ॥ ३४ ॥
आकर्षणं सुरस्त्रीणां नागलोकनिवासिनाम् ।
पिशाचयक्षरक्षांसि स्थिताः क्रूरग्रहाश्च ये ॥ ३५ ॥
दुष्टसत्त्वाश्च ये सर्वे परिसर्पन्ति भूतले ।
यन्त्रराजधरं दृष्ट्वा विद्रवन्ति त्रसन्ति च ॥ ३६ ॥
बहुना किमिहोक्तेन सर्वलोकसुखावहम् ।
स्त्रीणामाकर्षणं राज्ञां लोकवश्यकरं भुवि ॥ ३७ ॥
योगसिद्धिकरं पुंसां भवसागरतारकम् ।
भुक्तिमुक्तिकरं यन्त्रमिति प्रोक्तं स्वयम्भुवा ॥ ३८ ॥
वान्तं यान्तं समारूढं मायाबिन्दुविभूषितम् ।
श्रियो बीजमिति प्रोक्तं नृणां सद्यः सुखप्रदम् ॥ ३९ ॥
आदौ क्लींकारमुद्धृत्य कामदेवपदं वदेत् ।
आयान्तं विद्महे पुष्पबाणायेति पदं तथा ॥ ४० ॥
धीमहीतिपदं प्रोक्तं तन्नोऽनङ्गः प्रचोदयात् ।
एषा मन्मथगायत्री प्रोक्ता मन्मथदीपिनी ॥ ४१ ॥
कामबीजं च संभाव्य ततः कामपदं वदेत् ।
देवायेतिपदं ब्रूयात्तथा सर्वजनं पदम् ॥ ४२ ॥
प्रियायेति पदान्ते च वदेत् सर्वजनं पुनः ।
ब्रूयात् संमोहनायेति ज्वलशब्दं च वीप्सयेत् ॥ ४३ ॥
प्रज्वलेतिपदं सर्वजनस्य हृदयं तथा ।
उक्त्वा मम वशं पश्चात् कुरुशब्दं च वीप्सयेत् ॥ ४४ ॥
वह्निजायां तथेत्युक्त्वा मालाख्यो मन्मथो मनुः ।
भूगृहं चतुरस्रं स्यादष्टवज्रविभूषितम् ॥ ४५ ॥
अस्मिन्मन्त्रे समाराध्य वासुदेवं जगद्गुरुम् ।
किन्न सिध्यति मन्त्रज्ञो ह्यकथ्यं कथितं च ते ॥ ४६ ॥

एवं ते कथितं यन्त्रं प्रयोगान्तरमिष्यते ।
लक्षं जप्त्वा पलाशानां कुसुमैरयुतं हुनेत् ॥ ४७ ॥
व्याख्याता सर्वशास्त्राणामचिरादेव जायते ।
स योगी सत्यविज्ञानी विष्णुयोगी तथात्मवित् ॥ ४८ ॥
शुक्लादिवस्त्रलाभाय शुक्लादिपुष्पमाहुनेत् ।
अष्टोत्तरशतं कृत्वा राजतो वाऽन्यतो लभेत् ॥ ४९ ॥
मोचितौ पितरौ येन मथुरानिगडार्दितौ ।
ध्यात्वाऽयुतजपान्ते च तावत्संख्यां च होमयेत् ॥ ५० ॥
निगडान्मुच्यते सद्यो यमुद्दिश्य कृता क्रिया ।
पुरन्दरमुखैर्देवैः स्थितं वृन्दावने हरिम् ॥ ५१ ॥
सुरभ्याः पयसा तोयैरभिषिच्य च संस्थितम् ।
राजराजेश्वरं कृत्वा मंगलाचारपूर्वकम् ॥ ५२ ॥
उर्वशीप्रमुखाभिश्च स्वर्वेश्याभिरधिष्ठितम् ।
एवं ध्यात्वा जपेत् कृष्णं पंकजैरयुतं हुनेत् ॥ ५३ ॥
सार्वभौमो भवेत् सोपि येनेयं विहिता क्रिया ।
आत्मानं कंसमथनं रिपुं कंसात्मकं स्मरन् ॥ ५४ ॥
निशीथं प्रजपेन्मन्त्री दक्षिणामुखसंस्थितः ।
लक्षमेकं जपान्ते तु जवानीरसतर्पणैः ॥ ५५ ॥
अयुतं होममात्रेण म्रियतेऽरिर्न चान्यथा ।
अरिष्टपत्रं लक्षं तत्पादपांशुजलोक्षितम् ॥ ५६ ॥
हवनान्म्रियते शत्रुः शंकरेणापि रक्षितः ।
अरिष्टदलकार्पासव्योमास्थिकणसंयुतम् ॥ ५७ ॥
हवनाल्लक्षमात्रेण यदि दूरस्थितो भवेत् ।
अपि पीयूषसेवी च म्रियतेऽरिर्न चान्यथा ॥ ५८ ॥
हरिद्राग्रन्थिहोमेन स्तम्भयेदरिवाहिनीम् ।
न शस्तं मारणं कर्म कदाचिद्वैष्णवे मनौ ॥ ५९ ॥
क्रूरं क्रूरात् परं कष्टदायिनं च सतामपि ।
ईदृग्विधं मनुं प्राप्य अभिचाराय योजयेत् ॥ ६० ॥
प्रायश्चित्ताय गायत्रीं लक्षं जप्त्वा तु साधकः ।
तदन्ते पायसैर्मन्त्री अयुतं होममाचरेत् ॥ ६१ ॥
अपि प्रयोगकर्तृणां शान्तिः स्यान्नैव चान्यथा ॥ ६२ ॥

इति श्रीगौतमीये महातंत्रे सर्वतन्त्रोत्तमोत्तमेऽष्टादशोऽध्यायः ॥ १८ ॥

---

## अथ एकोनविंशोऽध्यायः

कामान्तरमथो वक्ष्ये शृणुष्वावहितोऽनघ ।
यज्जप्त्वा मन्दभाग्योपि लभेन्मन्त्रफलानि वै ॥ १ ॥

प्रणवद्वयमध्यस्थं जपेदयुतसंख्यया ।
त्रिरात्रं जपमात्रेण बृहस्पतिसमो भवेत् ॥ २ ॥

व्याख्याता सर्वशास्त्राणां वेदानामपि जायते ।
रविवारेऽश्वत्थवृक्षमालभ्याष्टोत्तरं शतम् ॥ ३ ॥

भूयो भूयो भवेच्छान्तिर्जीवेदष्टोत्तरं शतम् ।
तस्य शान्तिर्भवेन्नूनं यमुद्दिश्य कृता क्रिया ॥ ४ ॥

अंशुकैरर्चयेत् कृष्णं मासमात्रं तु निर्मलैः ।
मुच्यते सकलैः पापैः कृच्छ्रैर्घोरशतैरपि ॥ ५ ॥

पट्टवस्त्रैर्यजेद् भक्त्या संपत्तिमतुलां लभेत् ।
विद्रुमैः पूजयेत् कृष्णं त्रैलोक्यं वशमानयेत् ॥ ६ ॥

माणिक्यैः पूजयन् भक्त्या सार्वभौमतमो भवेत् ।
पद्मरागैर्यजेत् कृष्णं राजा भवति निश्चितम् ॥ ७ ॥
क्षत्रियः सार्वभौमः स्यात् साधयेत् सकलां महीम् ।
गारुत्मतमयै रत्नैः पूजयेज्ज्ञानवान् भवेत् ॥ ८ ॥
अपि हीरकरत्नेन पूजयन् किं न साधयेत् ।
सुवर्णपुष्पैरभ्यर्च्य मासं भक्तिपरायणः ॥ ९ ॥
कुबेरसमसंपत्तिं संप्राप्य मोदते चिरम् ।
देहान्ते हरितां प्राप्य निर्वाणपदमृच्छति ॥ १० ॥

रविवारे तथाम्भोजैः कह्लारैः सोमवारके ।
मंगले रक्तपुष्पैस्तु बुधे तगरसंभवैः ॥ ११ ॥
चंपकैर्गुरुवारे तु शुक्रे कुन्दसमुद्भवैः ।
शनिवारे शमीपुष्पैः पूजयेद् भक्तितो यतिः ॥ १२ ॥
रविवारे घृतान्नं तु पयोऽभ्यक्तं निवेदयेत् ।
सोमवारे पायसं तु मंगले मोदकं भवेत् ॥ १३ ॥

बुधवारे यावकैस्तु गुरुवारेऽपूपसंभवैः ।
मुद्गान्नं शुक्रवारे तु शनौ सघृतपायसम् ॥ १४ ॥

वैशाखे मासि विधिवत् पवित्रैः पूजयेद् विभुम् ।
एकैकं स्वर्णसूत्राणि ग्रन्थियुक्तानि कारयेत् ॥ १५ ॥
अथवा पट्टसूत्राणि पद्मसूत्राणि वा पुनः ।
पूजान्ते देवदेवाय महिषीभ्यो निवेदयेत् ॥ १६ ॥
मिथुनेभ्यस्तथा दत्त्वा महान्तमुत्सवं चरेत् ।
तोषयेद् भक्ष्यभोज्यैस्तु ब्राह्मणान् संशितव्रतान् ॥ १७ ॥
एवं संवत्सरे मन्त्री कृत्वाऽभीष्टमवाप्नुयात् ।
न चेद्वर्षकृता पूजा वास्तोभक्षाय कल्प्यते ॥ १८ ॥
श्रावणे मासि कृष्णं तं पूजयेत् केतकोद्भवैः ।
चन्द्रचन्दनकस्तूरी-कुङ्कुमादिसुवासितैः ॥ १९ ॥
एलालवंगकक्कोलफलानि बहुधाऽर्पयेत् ।
भाद्रे मासि यजेद्विष्णुं भक्ष्यैर्बहुगणान्वितैः ॥ २० ॥
इषे मासि यजेद् भक्त्या भक्ष्यैर्भोज्यैः सुविस्तरैः ।
कार्पास - निर्मितैर्वस्त्रैर्नानाभरण - संयुतैः ॥ २१ ॥
तुलास्थे भास्करे कृष्णं पूजयेन्मासमात्रकम् ।
रात्रौ प्रदीपैर्होमैश्च दुग्धपिष्टादिसंयुतैः ॥ २२ ॥
घृतदीपमविच्छिन्नं दद्यान्मासं महोज्ज्वलम् ।
एकादश्यामुपवसेद् द्वादश्यां पारणादिने ॥ २३ ॥
शुक्लायां विष्णुमभ्यर्च्य वस्त्रालंकरणादिभिः ।
अस्यां तिथौ तु मतिमान् वर्षतोत्सवमाचरेत् ॥ २४ ॥
भोज्यानि बहुभक्ष्याणि ब्राह्मणेभ्यो निवेदयेत् ।
एवंकृते देवताऽस्य तुष्टा चेष्टं प्रयच्छति ॥ २५ ॥
श्वेतं लोकमवाप्नोति पुनरावृत्तिवर्जितम् ।
मार्गशीर्षे यजेद्देवं नवान्नैर्व्यञ्जनैः शुभैः ॥ २६ ॥
नारिकेलफलं क्षौद्रं मिलितं गुडजीरकैः ।
सुपक्वं देवदेवाय भक्त्या तस्मै निवेदयेत् ॥ २७ ॥
पौषे मासि च मासं वै घृतैः पूपैः प्रपूजयेत् ।
ग्रहदोषं विजित्याऽऽशु भूयान्नृपतिसन्निभः ॥ २८ ॥
माघे मासि यजेत् कृष्णमक्षतैः सुशुभैः सितैः ।
दुग्धान्नशर्करायुक्तं मिष्टान्नं च निवेदयेत् ॥ २९ ॥
अस्मिन् मासे सिते पक्षे शुभे दिने वस्त्रेणाच्छादयेत् ।
फाल्गुने देवकीपुत्रं पूजयेत् स्वर्णचंपकैः ॥ ३० ॥

चूतसौगन्धिककुसुमै-र्धूपैर्दीपैः सुविस्तरैः ।
चैत्रे मासि वासुदेवं सर्वैः पुष्पैः समर्चयेत् ॥ ३१ ॥
पौर्णमास्यां यजेद्. भक्तया दमनैश्च सगुच्छकैः ।
अस्मिन्दिने रतिं कामं यजेत् स भक्तितत्परः ॥ ३२ ॥
न चेत् सांवत्सरी पूजा वृथा भवति निश्चितम् ।
भस्मीभूतं स्मरं दृष्ट्वा रुदिता सा रतिः सती ॥ ३३ ॥
तां दृष्ट्वा कृपयाविष्टो वरं दातुं स्वयं शिवः ।
प्रत्युवाच रतिस्तेऽयं सुभगत्वमवाप्नुयात् ॥ ३४ ॥
सुन्दरः सर्वलोकेषु क्रीडार्थं व्रजसुन्दरि ।
ततो भवेच्चन्दनजलापुष्टं दमनकं शुभम् ॥ ३५ ॥
तेन पूजनमात्रेण संवत्सरफलं लभेत् ।
होमयेल्लक्षमात्रं यः पिष्टकैर्घृतभर्जितैः ॥ ३६ ॥
तावत्संख्यां मनुं जप्त्वा कृष्णं पश्यति मन्त्रवित् ।
इति ते कथितं सम्यक् पूजनं वार्षिकोद्भवैः ॥ ३७ ॥
कृत्वाऽनेन विधानेन किं न साध्यति भूतले ।
पुण्यस्त्रियो गृहस्थाश्च मुनयो ब्रह्मचारिणः ॥ ३८ ॥
वनस्थाश्च तथा कृत्वा वांछितार्थानवाप्नुयुः ।
स्त्रियः शूद्राश्च विधिवत् कृत्वा फलमवाप्नुयुः ॥ ३९ ॥
इह भुक्त्वा वरान् भोगान्न भूयो भवसंभवः ।
एवं कृष्णं यजन् भक्त्या यत् कृत्वा जन्मकोटिभिः ।
तत्पापैर्न विलप्येत पद्मपत्रमिवाम्भसा ॥ ४० ॥

इति श्रीगौतमीये महातंत्रे सर्वतन्त्रोत्तमोत्तमे एकोनविंशोऽध्यायः ।

---

# अथ विंशोऽध्यायः

गौतम उवाच—

विस्तरेण मम ब्रह्मन् कृष्णमन्त्रान् प्रब्रूहि तान्।
भक्तोऽहं तव शिष्योऽहं योग्योऽस्मि श्रवणे गुरौ॥ १॥

नारद उवाच—

शृणु ब्रह्मन् कृष्णमन्त्रान् सर्ववैदिकसंमतान्।
यदेकज्ञानमात्रेण पुनर्जन्म न विद्यते॥ २॥

प्रणवं पूर्वमुद्धृत्य नमस्तदनु चोच्चरेत्।
कौस्तुभायेति संप्रोक्तो मनुरष्टाक्षरः परः॥ ३॥

एतद्विज्ञानमात्रेण साक्षाद्विष्णुर्भवेद्यतिः।
षड्दीर्घस्वरसंभेद्यकामेनाङ्गक्रिया मता॥ ४॥

कलायकुसुमश्यामं शंखचक्रगदाम्बुजम्।
अनेकरत्नसंच्छन्नं कौस्तुभोद्भासिवक्षसम्॥ ५॥

तारहारावलीरम्यं गरुडोपरिसंस्थितम्।
ध्यात्वैवं परमानन्दं दशलक्षं जपेन्मनुम्॥ ६॥

होमयेत्तद्दशांशेन साधितैः पूपपायसैः।
पुरश्चरणमंगं यच्छ्रेयमन्यत् समापयेत्॥ ७॥

य एवं भजते मन्त्री भोगमोक्षैककारणम्।
करप्रचेयाः सर्वार्था अन्ते च परमं व्रजेत्॥ ८॥

दशाक्षरसमानं हि पूजनं समुदीरितम्।
अथान्यं संप्रवक्ष्यामि षडर्णं मन्त्रराजकम्॥ ९॥

यस्य विज्ञानमात्रेण जीवन्मुक्तो महीं चरेत्।
त्रिमात्रं नमसा युक्तं चतुर्थ्यां कृष्ण इत्यपि॥ १०॥

षडक्षरमनुः प्रोक्तो दृष्टादृष्टफलप्रदः।
नारदोऽस्य मुनिः प्रोक्तो गायत्रीछन्द उच्यते॥ ११॥

श्रीकृष्णो देवता साक्षाद् दुर्गाधिमातृदेवता।
त्रिमात्रं बीजमित्युक्तं नमः शक्तिरुदीरिता॥ १२॥

कृष्णाय कीलकं चास्य मन्त्रराजस्य कीर्तनम् ।
विनियोगोऽस्य मन्त्रस्य पुरुषार्थचतुष्टये ॥ १३ ॥

पञ्चाङ्गानि मनोरस्य प्राक् चक्राद्यैरुदीर्यते ।
नीलजीमूतसंकाशं किङ्किणीजालमालिनम् ॥ १४ ॥

सर्वाभरणसंदीप्तं रक्तपद्मोपरि स्थितम् ।
सनकाद्यैर्मुनिवरैः स्तुतं ध्यायेद्दिगम्बरम् ॥ १५ ॥

आलोककुन्तलोद्भासि - मुखचन्द्रविराजितम् ।
शशरक्ताधरोष्ठं च पाणिपादविराजितम् ॥ १६ ॥

कराभ्यां पायसं श्लक्ष्णं सद्योहैयंगवीनकम् ।
दधतं चिन्तयेद् देवं भोगमोक्षफलप्रदम् ॥ १७ ॥

ध्यात्वैवं परमात्मानं दशलक्षं जपेन्मनुम् ।
जपान्ते पायसैः शुद्धैर्होमं कुर्यात् सशर्करैः ॥ १८ ॥

तर्पयेत्तद्दशांशेन जलैः कर्पूरवासितैः ।
अभिषेकं दशांशेन दशांशैर्विप्रभोजनम् ॥ १९ ॥

अस्यान्ते दक्षिणां दत्त्वा साधयेद्वित्तमात्मनः ।
भिक्षाहारो जपेन्मन्त्रं वर्षमेकं व्रजे स्थितः ॥ २० ॥

कविर्वाग्मी समृद्धश्च सर्वज्ञो जायते ध्रुवम् ।
नवनीताशनं देवं ध्यात्वा लक्षं जपेत् सुधीः ॥ २१ ॥

दिव्यज्ञानमवाप्नोति त्रिलोकीं प्राप्य मोदते ।
य एवं मन्त्रराजं तु भजते भक्तितत्परः ॥ २२ ॥

इह भुक्त्वा वरान् भोगान् देहान्ते परमं विशेत् ।
तथापरं प्रवक्ष्यामि षोडशार्णं महामनुम् ॥ २३ ॥

अस्य विज्ञानमात्रेण कृष्णात्मपरमं विशेत् ।
प्रणवं नमसा युक्तं कृष्णगोविन्दकौ तथा ॥ २४ ॥

ॐ नमः कृष्णाय गोविन्दाय हूँ फट् स्वाहा ।
श्रीपूर्वौ ङेन्तावुभायं हुँ फट् स्वाहेतिकीर्तितः ॥ २५ ॥

नारदोऽस्य मुनिश्रेष्ठश्छन्दोऽनुष्टुबुदाहृतम् ।
परमात्मा हरिर्देवो भुक्तिमुक्तिफलप्रदः ॥ २६ ॥

दशार्णकवदेवास्य पूजाहोमौ प्रकीर्तितौ ।
प्रयोगस्तत्समः प्रोक्तो बीजं शक्तिश्च तत्समे ॥ २७ ॥

य एवं पूजयेन्मन्त्रं सोऽधीते श्रुतिचतुष्टयम् ।
अनेन सदृशो मन्त्रो जगत्स्वपि न विद्यते ॥ २८ ॥

अनेनाराधितः कृष्णः प्रसीदत्येव तत्क्षणात् ।
अथ संतानसंसिद्धयै प्रजपेन्मासमात्रकम् ॥ २९ ॥

यस्य विज्ञानमात्रेण सर्वे सिध्यन्ति मन्त्रिणः ।
देवकीपुत्रशब्दान्ते गोविन्दपदमीरयेत् ॥ ३० ॥

वासुदेवपदान्ते तु ततो ब्रूयाज्जगद्गुरुम् ।
देहि मे तनयं देव त्वामहं पदमीरयेत् ॥ ३१ ॥

शरणं गत इत्युक्तो मन्त्रश्चानुष्टुबव्ययः ।
नारदोऽस्य मुनिश्छन्दो गायत्री कथितं बुधैः ॥ ३२ ॥

सन्तानदो हरिः साक्षाद्देवता च प्रकीर्तितः ।
व्यस्तैः समस्तैरङ्गानि कृत्वा देवं विचिन्तयेत् ॥ ३३ ॥

नीलोत्पलदलश्यामं पीताम्बरयुगावृतम् ।
चतुर्भुजं शंखचक्रमूर्ध्वपाणिद्वये धृतम् ॥ ३४ ॥

अधः पाणिद्वये वेणुं वादयन्तं मुदान्वितम् ।
अनेकरत्नसंबद्ध—किरीटोज्ज्वलविग्रहम् ॥ ३५ ॥

नानालंकारसुभगं गरुडोपरि संस्थितम् ।
वेदस्तोत्रपरैर्नित्यं मुनिभिः परिवेष्टितम् ॥ ३६ ॥

एवं ध्यात्वाऽर्चयेत् कृष्णं पंचाङ्गैः प्रथमावृतिः ।
इन्द्रादिभिर्द्वितीया स्यात् तृतीया तु तदा बुधैः ॥ ३७ ॥

एवमभ्यर्च्य देवेशं लक्षमात्रं जपेन्मनुम् ।
पुत्रजीवेन्धनयुतैस्तत्फलैरयुतं हुनेत् ॥ ३८ ॥

अनन्तरं दशांशेन तर्पणादीनि चाचरेत् ।
य एवं पूजयेन्मन्त्री संतानाख्यं महामनुम् ॥ ३९ ॥

पुत्रपौत्रैर्विनन्द्येह देहान्ते परमं विशेत् ।
अविच्छिन्नं भवेद्वंशं यावदाभूतसंप्लवम् ॥ ४० ॥

दशम्यां शुक्लपक्षे तु निशीथे स्वस्तिमण्डलम् ।
हरिमावाह्य विधिवत् पूजयेदुपचारकैः ॥ ४१ ॥

एवमर्चनमात्रेण वत्सरात् पुत्रवान् गृही।
दीर्घायुरप्रतिहत - बलवीर्य - समन्वितम् ॥ ४२ ॥

वत्सराल्लभते पुत्रं सत्यं सत्यं मयोदितम्।
यस्यार्थे कुरुते मन्त्री प्रयोगात् स तु पुत्रवान् ॥ ४३ ॥

बन्ध्यापि लभते पुत्रान् शतहायनजीवितान्।
प्रातर्वाचंयमा नारी अश्वंत्थनिर्मले दले ॥ ४४ ॥

मन्त्रयित्वाष्टोत्तरशतं पिबेत् पुत्रीयति ध्रुवम्।
एवं प्रयोगान्मासमात्रात्तनयं लभते ध्रुवम् ॥ ४५ ॥

अनेन मन्त्रयित्वाऽऽज्यं पुत्रसिद्धिकरं परम्।
अनेन जलपानेन बन्ध्या वर्षाल्लभेत् प्रजाम् ॥ ४६ ॥

इति श्रीगौतमीये महातन्त्रे सर्वतन्त्रोत्तमोत्तमे विंशोऽध्यायः ॥ २० ॥

# अथ एकविंशोऽध्यायः

श्रीगौतम उवाच—

सर्वं जानासि त्वं ब्रह्मन् स्वयम्भूसदृशः प्रभो।
त्वदुदीरितमाकर्ण्य कृतार्थोऽहं न चान्यथा॥ १॥
तपस्तप्त्वा पुरा ब्रह्मन् प्रार्थितो हरिरीश्वर।
तेनैवोक्तं नारदेन कथितव्यंमखण्डितम्॥ २॥
तदारभ्य तदा ब्रह्मन् तव दर्शनलालसः।
गंगाप्रवाहणं मन्त्रे श्रोतुमिच्छामि तत्त्वतः॥ ३॥

श्रीनारद उवाच—

बह्वयः कथिता मन्त्रा मया ते मुनिसत्तम।
तं मन्त्रं कथयाम्यद्य येन ज्ञानं प्रसीदति॥ ४॥
यस्य विज्ञानमात्रेण भक्तिः स्यात् प्रेमलक्षणा।
चतुर्विधं तु पाण्डित्यं ज्ञानमात्रेण सिध्यति॥ ५॥
मन्दभाग्यो दरिद्रोऽपि शठो मुंडोऽतिपातकी।
उपास्य मन्त्रराजं तु वागीशसमतां व्रजेत्॥ ६॥
मयाऽप्येवं प्रपृष्टश्च पद्मयोनिर्यथाऽवदत्।
तथा ते कथयिष्यामि गुह्याद् गुह्यतरं मुने॥ ७॥
द्वाविंशत्यक्षरो मन्त्रो वागीशत्वप्रवर्तकः।
सर्वतन्त्रेषु गुह्योऽयं गोपनीयस्त्वया मुने॥ ८॥
वेदाः प्रादुरभूदास्ये मन्त्रेणानेन वेधसः।
कवीन्द्रत्वं भार्गवश्च वागीशत्वं बृहस्पतिः॥ ९॥
श्रियमिन्द्रादयो देवा ज्ञानं च सनकादयः।
सौभाग्यं चन्द्रमाः प्राप्तः कुवेरोऽपि धनेशताम्॥ १०॥
इमं मन्त्रवरं ज्ञात्वा सर्वज्ञो भवति ध्रुवम्।
अदृष्टाश्रुतशास्त्रस्य व्याख्याता शिल्पगो भवेत्॥ ११॥
महाकविर्महाप्राज्ञो वाक्पतेः समतां व्रजेत्।
ज्ञानं तु परमं लब्ध्वा विष्णोः सायुज्यतां व्रजेत्॥ १२॥
यं यं काममभिध्यायन् भजते मनुजो मनुम्।
तं तं काममवाप्नोति भुवि स्वर्गे रसातले॥ १३॥
तस्योद्धारमहं वक्ष्ये मम सार्वज्ञ्यकारणम्।
कृष्णगोविन्दकौ ङेन्तौ तथा गोपीजनं ततः॥ १४॥

वल्लभोऽग्निप्रियया सह पूर्वः स्वमंतुस्वरः।
नाम्नामादौः। क्रमात् काममायालक्ष्मीर्नियोजयेत् ॥ १५ ॥
द्वाविंशत्यक्षरो मन्त्रो वाग्भवाद्यः प्रकीर्तितः।
अहमस्य मुनिश्छन्दो गायत्री देवता मनोः ॥ १६ ॥
गंगाप्रवाहणः कृष्णः सर्वदेवनमस्कृतः।
गंगाप्रवाहवद्वाणी जायते न तदन्यथा ॥ १७ ॥
गंगाप्रवाहणो नाम कीर्त्तने परमार्थतः।
बीजं तु मान्मथं प्रोक्तं शक्तिः पत्नी हविर्भुजः ॥ १८ ॥
कृष्णाय कामबीजाभ्यां हृदयं परिकीर्तितम्।
गोविन्दाय शिरस्तद्वन्मायान्यचरणेन च ॥ १९ ॥
गोपीजनशिखा तद्वत् श्रीबीजाद्येन विन्यसेत्।
वल्लभायेति कवचमस्त्रं जाया हविर्भुजः ॥ २० ॥
शेषबीजेन सहितं पञ्चांगं मनवः स्मृतः।
मूर्ध्नि भाले भ्रुवोर्मध्ये नेत्रे कर्णे तथा नसि ॥ २१ ॥
आस्ये कंठे च दोर्मूले हृदयोदरनाभिषु।
लिङ्गमूले तथाधारे ऊर्वोर्जान्वोश्च गुल्फयोः ॥ २२ ॥
समस्तेन च मन्त्रेण व्यापकं न्यस्य चिन्तयेत्तत्।
कलायकुसुमश्यामं पूर्णचन्द्रनिभाननम् ॥ २३ ॥
बर्हि-बर्ह-कृतोत्तंसं वनमालिनमीश्वरम्।
किरीट - हार - केयूर-रत्न - कुंडल - मंडितम् ॥ २४ ॥
श्रीवत्सवक्षसं भ्राजत्-कौस्तुभोद्भासितोरसम्।
युवतीवेषलावण्यं रमणीय-तनुं हरिम् ॥ २५ ॥
दिव्यपीताम्बरधरं तारहारविभूषितम्।
स्मेरारुणाधरन्यस्तवेणुं त्रैलोक्य-मोहनम् ॥ २६ ॥
सर्ववेदमयं वेणुं वादयन्तं चतुर्भुजम्।
स्फाटिकीमक्षमालां च विद्यामूर्ध्वकरद्वये ॥ २७ ॥
दधतं पुण्डरीकाक्षं दिव्यगानपरायणम्।
अतुल्यानल्पसौन्दर्य्यैर्मोहयन्तं जगत्त्रयम् ॥ २८ ॥
तपनीयलसत्कान्त्या वीणाकमलहस्तया।
निरीक्ष्यमाणचरणं वामपार्श्वस्थया श्रिया ॥ २९ ॥
हेमसिंहासने रम्ये सर्वरत्नोपशोभिते।
रुक्मिण्यादि-महिषीभिर्निरन्तर-निषेवितम् ॥ ३० ॥

चन्द्रमंडल-संकाश-श्वेतच्छत्रोपशोभितम् ।
नारदाद्यैर्मुनिगणै-र्ज्ञानार्थिभिरुपासितम् ॥ ३१ ॥

इन्द्राद्यैर्देवतावृन्दैः प्रणतं परमेश्वरम् ।
सर्वज्ञं जगदीशानं ध्यात्वा हृदयपंकजे ॥ ३२ ॥

जपेदेवं मनुवरं ध्यात्वा लक्षचतुष्टयम् ।
आज्याक्तैः कुंसुमैर्ब्रह्म-वृक्षजैर्होममाचरेत् ॥ ३३ ॥

दशांशेन हि मन्त्रोऽयं सिद्धो भवति नान्यथा ।
पूजा दशाक्षरे पीठे अंगावृत्तिरनंतरम् ॥ ३४ ॥

महिषीभिर्द्वितीया स्यात्तृतीया दिगधीश्वरैः ।
चतुर्थी तत्प्रहरणैश्चतुरावृत्तिरीरिता ॥ ३५ ॥

प्रातः प्रातः पिबेत्तोयं मन्त्रेणानेन मन्त्रितम् ।
वागीश्वरसमो भूत्वा काव्यकर्त्ता महान् भवेत् ॥ ३६ ॥

अनेन मन्त्रितं नित्यं ब्राह्मीपत्रं प्रभक्षयेत् ।
मण्डलादेव मतिमान् महाश्रुतिधरो भवेत् ॥ ३७ ॥

ब्राह्मी-कुष्ठ-वचाकल्कं घृतेन द्विगुणेन च ।
चतुर्गुणं भवेद् दुग्धं पाचितं घृतमुत्तमम् ॥ ३८ ॥

अवतार्य्यं जपेत्तत्र अयुतं जपमादरात् ।
कर्षमात्रं प्रातरेव भक्षयेन्मौनमास्थितः ॥ ३९ ॥

एतद्भक्षणमात्रेण बृहस्पतिसमो भवेत् ।
हस्तमारोप्य जिह्वायां जपेदयुतमादरात् ॥ ४० ॥

प्रतिभा जायते दिव्या सर्वलोकैकभाविता ।
धवलैरुपचारैस्तु यदि देवं प्रपूजयेत् ॥ ४१ ॥
दिव्यज्ञानमवाप्नोति प्रतिभा विश्वजित्वरी ।
श्रीबीजाद्यं यदा जप्त्वा तदा लक्ष्मीरचंचला ॥ ४२ ॥

कामादिजपनादेव सर्वलोकं वंश नयेत् ।
मायादिजपनादेव वाक्सिद्धिर्जायतेऽचिरात् ॥ ४३ ॥

शक्तिबीजादिको मंत्रो निर्वाणमचिराद्द् दिशेत् ।
पुटनात् प्रणवाभ्यां तु मोक्षमाप्नोति निश्चितम् ॥ ४४ ॥

एवं मन्त्रवरं जप्त्वा किं न साध्यति मन्त्रवित् ।
एवं मन्त्रवरं यस्तु भजते भक्तितत्परः ॥ ४५ ॥

इह भुक्त्वा वरान् भोगान् समस्तश्रृद्धिसंयुतान् ।
संविदं परमां लब्ध्वा भूयादन्ते परं पदम् ॥ ४६ ॥

कामेन्द्राद्या पराशक्तिर्नादबिन्दुसमन्विता ।
कथितः कृष्णवर्णानां मन्त्रोऽयं मन्त्रनायकः ॥ ४७ ॥

ऋषिर्ब्रह्मा समाख्यातो विराट्छन्द उदीरितः ।
त्रैलोक्यमोहनो देवः श्रीकृष्णः परिकीर्तितः ॥ ४८ ॥

कलपड्दीर्घबीजेन षडङ्गाः परिकीर्तिताः ।
अंसालम्बित-वामकुण्डलधरं मन्दोन्नसद्भ्रूतलैः
किंचित्कुञ्चितकोमलाधरपुटं साचिप्रसारेक्षणम् ।

आलोलाङ्गुलिपल्लवैर्मुरलिकामापूरयन्तं मुदा
मूले कल्पतरोस्त्रिभङ्गललितं ध्यायेज्जगन्मोहनम् ॥ ४९ ॥

एवं ध्यात्वा जपेन्मन्त्रं श्रद्धया दशलक्षकम् ॥ ५० ॥

तद्दशांशेन जुहुयात् पायसैरथवाऽम्बुजैः ।
दशाक्षरोदिते पीठे पूजयेत्तद्विधानतः ॥ ५१ ॥

प्रयोगानपि सर्वत्र तदुक्तानपि कारयेत् ।
अथवा बालकृष्णं च नीलेन्दीवरसन्निभम् ॥ ५२ ॥

रत्नाभरणसंदीप्तं द्विभुजं नीलकुन्तलम् ।
पायसं नवनीतं च कराभ्यां दधतं स्मरेत् ॥ ५३ ॥

लक्षमेकं जपेन्मन्त्री होमयेत् पायसैः शुभैः ।
दशांशं विधिवद्भक्त्या पूजाङ्गेन्द्रादिभिरायुधैः ॥ ५४ ॥

होमयेदयुतं मन्त्री घृतभर्जितपिष्टकैः ।
अलक्ष्मीर्नश्यति क्षिप्रं कान्ति तेजश्च विन्दति ॥ ५५ ॥

पलाशकुसुमैर्हुत्वा वाक्सिद्धिं लभते ध्रुवम् ।
पङ्कजैर्जुहुयान्मन्त्री अयुतं श्रियमाप्नुयात् ॥ ५६ ॥

नवनीतस्य होमेन कविर्वाग्मी प्रजायते ।
वसुदेवपदं चोक्त्वा निगडच्छेदनाय च ॥ ५७ ॥

वासुदेवपदं चोक्त्वा स्वाहेतितन्मनुर्भवेत् ।
नारदोऽस्य मुनिः प्रोक्तश्छन्दोऽनुष्टुबुदाहृतम् ॥ ५८ ॥

निगडच्छेदना लक्ष्मीवासुदेवोऽस्य देवता ।
प्रयोगान् हि मनोरस्य आचक्रार्येश्च कल्पयेत् ॥ ५६ ॥

रंगमण्डलमध्ये तु कंसं निपात्य हेलया ।
ज्ञानिनां वर्द्धयन् हर्ष-मानीय पितरौ स्वयम् ॥ ६० ॥

निगडान्मोचितौ भक्त्या प्रणम्य च पुनः पुनः ।
राज्ये संस्थाप्य विधिवद् देवकं वीक्षितं नृपैः ॥ ६१ ॥

एवं ध्यात्वा जपेल्लक्षं जुहुयात्तद्दशांशतः ।
अङ्गैराशाधिपैः सम्यक् ततस्तैर्वचनोदिता ॥ ६२ ॥

य एवं चिन्तयेन्मन्त्री स सम्यक् संपदापतिः ।
राजदुर्गभयादिभ्यो मुच्यते बन्धनादितः ॥ ६३ ॥
राजद्वारे भये घोरे स्मरणान्मुच्यते भयात् ।

इति श्रीगौतमीये महातन्त्रे सर्वतन्त्रोत्तमोत्तमे एकविंशोऽध्यायः ।

---

## अथ द्वाविंशोऽध्यायः

गोपालपिण्डसंज्ञं च कथयामि मुने शृणु।
यदाकर्ण्य गुरोर्भक्त्या परत्रेह च मोदते॥ १॥
अनेन सदृशो मन्त्रो जगत्स्वपि न विद्यते।
पंचान्तको धरासंस्थ-श्चतुर्दशस्वरैर्युतः।
कथितो मन्त्रराजोऽयं भुक्ति-मुक्ति-फलप्रदः॥ २॥
ऋषिर्ब्रह्माऽस्य गायत्री छन्दः श्रीकृष्णदेवता।
गोभ्यां च बीजशक्तिस्तु कीलकम् ॐ इत्युच्यते॥ ३॥
षड्दीर्घभाजा बीजेन षडङ्गानि प्रकल्पयेत्।
वृन्दावनगतं कृष्णं रत्नसिंहासने स्थितम्॥ ४॥
नारदाद्यैर्मुनिवरै - र्दिव्यगान - रसात्मकैः।
सहितं परया भक्त्या वनमालिनमीश्वरम्॥ ५॥
नानालंकार-संदीप्तं शंखचक्रलसत्करम्।
शब्दब्रह्ममयं वेणु-मधःपाणिद्वयेरितम्॥ ६॥
एवं ध्यात्वा मनुवरं लक्षमात्रं जपेद्वशी।
सितान्वितैः पायसैस्तु युतं होमं समाचरेत्॥ ७॥
य एनं भजते मन्त्री सिद्धयस्तस्य हस्तगाः।
धवलैः कुसुमैर्होमाद् वाक्सिद्धिं लभतेऽचिरात्॥ ८॥
कर्णिकारस्य होमेन लक्ष्मीः सर्वविधा भवेत्।
अनेनमन्त्रि तं तोयं प्रातः प्रातः पिबेज्जलम्॥ ९॥
कविर्वाग्मी श्रुतिधरः सर्वज्ञो जायते ध्रुवम्।
अस्योपासनमात्रेण किं न सिध्यन्ति मन्त्रिणः॥ १०॥
इह भोगान् वरान् भुक्त्वा पुत्रपौत्रसमन्वितैः।
अन्ते तत्परमं धाम मन्त्री याति निरामयम्॥ ११॥
अथ वक्ष्ये महायन्त्रं सर्वेप्सितफलप्रदम्।
यस्य धारणमात्रेण किं न सिद्ध्यति भूतले॥ १२॥
बीजत्रिकोणमालिख्य षट्कोणं तद्बहिर्लिखेत्।
षडक्षरं लिखेत्तत्र वृत्तं चाष्टदलं लिखेत्॥ १३॥
अष्टाक्षरेण संयुक्तं तद्बहिः षोडशच्छदम्।
षोडशार्णं कृष्णमनुं बहिर्दशदलान्वितम्॥ १४॥

दशाक्षरेण संयुक्तमष्टादशदलं ततः ।
अष्टादशार्णं तन्मध्ये तद्बहिर्द्वात्रिंशदम्बुजम् ॥ १५ ॥
अनुष्टुबाख्यं तत्रैव तद्बहिर्वृत्तमालिखेत् ।
पिण्डबीजं वेष्टनेन लिखेद्यन्त्रस्य सर्वतः ॥ १६ ॥
तद्बहिर्वृत्तं निष्पाद्य मातृकां तत्र वेष्टयेत् ।
वृत्तद्वयं पुनः कृत्वा पाशाङ्कुशेन वेष्टयेत् ॥ १७ ॥
तद्बहिर्वृत्तमेकं तु चतुरस्रं सवज्रकम् ।
एतदुक्तं महायन्त्रं कृपया मुनिसत्तम ॥ १८ ॥
सुवर्णपट्टे भूर्जे वा नित्यं तु सुसमाहितः ।
अष्टगन्धैर्मपी कृत्वा लिखेत् स्वर्णशलाकया ॥ १९ ॥
अस्य धारणमात्रेण साक्षाद् भूमिपुरन्दरः ।
मुच्यते मलिनैः कृच्छ्रैर्दुःखैर्घोरतरैरपि ॥ २० ॥
शान्तिं च शाश्वतीं लब्ध्वा यांति तत्परमं पदम् ।
स्त्रीणां वामभुजे नित्यं धारणात् किं न सिध्यति ॥ २१ ॥
बन्ध्यापि लभते पुत्रं शतहायनजीवितम् ।
दीर्घायु-रप्रतिहत-बल-वीर्य्य-समन्वितम् ॥ २२ ॥
शशिचक्रं विलिख्याथ कुम्भं संस्थाप्य पूर्ववत् ।
विक्षिप्य मन्त्रं तन्मध्ये सेकात् सर्वं हि साधयेत् ॥ २३ ॥
नित्यदर्शी भवेद्विप्रो महीं शास्ति महीपतिः ।
वैश्यः समृद्धिमान् भूयाल्लभेत् पुत्रं यथेप्सितम् ॥ २४ ॥
एतत्तु कथितं यन्त्रं पुरुषार्थैकसाधनम् ।
केवलं तत्प्रयत्नेन गोपायस्व मुने स्वयम् ॥ २५ ॥

इति श्रीगौतमीये महातन्त्रे सर्वतन्त्रोत्तमोत्तमे द्वाविंशोऽध्यायः ॥ २२ ॥



## अथ त्रयोविंशोऽध्यायः

अथ वक्ष्ये मनुवरं समस्तपुरुषार्थदम्।
यज्ज्ञानात् सिद्धयः सर्वा भवन्ति करसंस्थिताः ॥ १ ॥
लक्ष्मीर्माया कामबीजं ङेन्तं कृष्ण पदं तथा।
स्वाहेति मन्त्रराजोयं भुक्तिमुक्तिफलप्रदः ॥ २ ॥
नारदो मुनिराख्यातश्छन्दोऽनुष्टुबुदीरितम्।
देवता कृष्ण इत्युक्तः समस्तपुरुषार्थदः ॥ ३ ॥
षडङ्गं कामबीजेन षड्दीर्घभेदनेन तु।
कलायकुसुमश्यामं वृन्दावनगतं हरिम् ॥ ४ ॥
गोपगोपीगवावीतं पीतवस्त्रयुगावृतम्।
नानालंकारसुभगं कौस्तुभोद्भासिवक्षसम् ॥ ५ ॥
सनकादिमुनिश्रेष्ठैः संस्तुतं परदा मुदा।
शङ्खचक्रलसद्बाहुं वेणुं हस्तद्वयेरितम ॥ ६ ॥
ध्यात्वैवं परमात्मानं चतुर्लक्षं जपेन्मनुम्।
दशांशं जुहुयान्मन्त्री कुसुमैर्ब्रह्मवृक्षजैः ॥ ७ ॥
भक्त्या त्रिसन्ध्यं च यजे-दङ्गैरिन्द्रादिभिस्ततः।
तथा प्रयोगे कुर्वीत धर्मकामार्थमुक्तये ॥ ८ ॥
पायसैरयुतं हुत्वा ज्ञानं दिव्यमवाप्नुयात्।
तद्वच्च लवणैर्हुत्वा लोकं संकर्षयेद् ध्रुवम् ॥ ९ ॥
पलाशपुष्पैर्जुहुयात् कविर्वाग्मी च जायते।
मत्स्यण्डी - कदली - दुग्ध - घृत - पायसतद्धिया ॥ १० ॥
तर्पयेदयुतं मन्त्री गांगेयेन जलेन वै।
मण्डलादिहिता सिद्धिर्भवेन्नैवात्र संशयः ॥ ११ ॥
वाग्भवाद्येन जापेन वागीशसमतां व्रजेत्।
व्याघ्रीतत्कुसुमैर्हुत्वा निधिं प्राप्नोत्ययत्नतः ॥ १२ ॥
श्रीवृक्षफलहोमेन राज्यैश्वर्य्यमवाप्नुयात्।
एवं ते कथितं भक्त्या दुर्लभं मन्त्रनायकम् ॥ १३ ॥
सत्संप्रदायसंप्राप्तं किं न सिध्यति मन्त्रिणः।
अष्टादशार्णो मारान्तो मन्त्रः सुतधनप्रदः ॥ १४ ॥

नारदोऽस्य मुनिश्छन्दो गायत्रं कथितं बुधैः ।
बालकृष्णो देवताऽस्य समस्तार्थफलप्रदः ॥ १५ ॥

षड्दीर्घभाजा क्रमेन बीजेनाङ्गक्रिया मता ।
इन्दीवरसमाभासं बालं त्रैलोक्यमोहनम् ॥ १६ ॥

लसद्रत्नमयैर्दीप्तैर्मण्डितं बहुभूषणैः ।
नानारत्नमयोद्भासिव्याघ्रकामांकुशाङ्गलम् ॥ १७ ॥

कुन्तलान्तसमुद्भासि—स्फुरन्मकरकुण्डलम् ।
हस्तिहस्तकराभ्यां च नवनीतं च पायसम् ॥ १८ ॥

दधतं देववृन्दैश्च वेष्टितं गोपबालकैः ।
एवं ध्यात्वा जपेन्मन्त्री द्वात्रिंशल्लक्षमानतः ॥ १९ ॥

जपान्ते जुहुयादग्नौ पायसैस्तद्दशांशतः ।
तर्पणादीनि सर्वाणि पूर्ववत् समुपाचरेत् ॥ २० ॥

साधयेत् सर्वकर्माणि सिद्धेनानेन मन्त्रवित् ।
रक्तपद्मायुतं हुत्वा द्विजो ज्ञानमवाप्नुयात् ॥ २१ ॥

सर्वलोकैकशास्ता च क्षत्रियो नात्र संशयः ।
अन्येषां यद्यदिष्टं तत साधयेन्मनुनाऽमुना ॥ २२ ॥

रक्तपद्मोपरि ध्यात्वा शर्करापृथुलाजकैः ।
कदलीगुडदुग्धया च जलैः सन्तर्प्य केशवम् ॥ २३ ॥

वत्सराल्लभते पुत्रं सर्वलोकनमस्कृतम् ।
अनेन च यद्यदिष्टं जपमात्रेण साधयेत् ॥ २४ ॥

मा च रमाकामबीज - त्रयाद्यो दशवर्णकः ।
त्रयोदशाक्षरो मन्त्री दृष्टादृष्ट-फलप्रदः ॥ २५ ॥

ऋषिरस्य स्मृतो ब्रह्मा छन्दोऽनुष्टुबुदाहृतम् ।
श्रीकृष्णदेवता प्रोक्तो महदैश्वर्यदीपकः ॥ २६ ॥

कुर्यादस्य मनोर्मन्त्री कामाद्यैरङ्गपञ्चकम् ।
शङ्ख-चक्र-गदा-पद्म-पाशां - कुशलसत्करम् ॥ २७ ॥

कराभ्यां वेणुमादाय धमन्तं सर्वमोहनम् ।
सूर्यायुतसमाभासं पीताम्बरयुगावृतम् ॥ २८ ॥

नानालङ्कारसुभगं रविमण्डलसंस्थितम् ।
एवं ध्यात्वा जपेन्मन्त्रं चतुर्लक्षमनन्यधीः ॥ २९ ॥

जपान्ते तद्दशांशेन पायसैर्होमयेद् द्विजः ।
पूजयेन्मन्त्रराजेन वक्ष्यमाणेन वर्त्मना ॥ ३० ॥
मध्ये कृष्णं समावाह्य षडङ्गविधिनाऽर्चयेत् ।
विंशत्यर्णोदितं विप्र प्रयोगानपि साधयेत् ॥ ३१ ॥
य एवं भजते मन्त्रा भक्त्या च परिपूजयेत् ।
राज्यैश्वर्यमवाप्यान्ते भूयात्तत् परमं महः ॥ ३२ ॥
काममायारमापूर्वो दशार्णो मनुनायकः ।
रमामायाकामपूर्वो दशार्णः संप्रकीर्तितः ॥ ३३ ॥
अनयोर्मन्त्रयोर्मन्त्री आचक्राद्यैः षडङ्गकम् ।
कृत्वा दशार्णवत् सम्यग् ध्यानपूजादिकं सुधीः ॥ ३४ ॥
सपर्यां चरते यस्तु मन्त्रयोरेकमाश्रितः ।
इह भुक्त्वा वरान् भोगान् महत्त्वेन समन्वियात् ॥ ३५ ॥
पुत्रैः पौत्रैः प्रपौत्रैश्च देहान्ते हरितां व्रजेत् ।
अथ वक्ष्ये शृणु मुने प्रतिपत्तिं जगत्पतेः ॥ ३६ ॥
इन्द्रादिप्रमुखैर्देवैः सुगुह्या क्रियते तथा ।
कुबेरोऽपि च यां ज्ञात्वा तपस्यन् ब्रह्मणो मुखात् ॥ ३७ ॥
महेशसखितां प्राप्य धनेशत्वमवाप्नुयात् ।
इन्द्रोपि यामुपास्यैवं देवराजत्वमाप्तवान् ॥ ३८ ॥
त्रैलोक्ये विजयी भूत्वा देवदैत्यैकशासकः ।
मायारमादिको ह्यष्टादशार्णो विंशदर्णकः ॥ ३९ ॥
अनेन सदृशो मन्त्रस्त्रिषु लोकेषु दुर्लभः ।
ऋषिर्ब्रह्मा समुद्दिष्टो गायत्रं छन्द एव च ॥ ४० ॥
देवता देवतावृन्दवन्द्यः श्रीकृष्ण ईरितः ।
अष्टादशार्णवत् कुर्यान्मन्त्रार्णैरङ्गपञ्चकम् ॥ ४१ ॥
द्वारवत्यां महोद्याने दीर्घिकाशतमण्डिते ।
पारिजातवने रम्ये सुवर्णभूमिमध्यतः ॥ ४२ ॥
सर्वरत्नमये चित्रे सुमेरुनिभमण्डपे ।
सिंहासने समासीनं सूर्यकोटिसमप्रभम् ॥ ४३ ॥
रक्तोत्पलसमाभासे पाणिपादाम्बुजं स्मरेत् ।
दक्षिणं चरणाम्भोजं रत्नपूर्णघटोपरि ॥ ४४ ॥

वामपादाम्बुजं दिव्यं स्वस्तिकाकारकारितम् ।
शङ्ख-चक्र-गदा-पद्म-लसद्बाहु-चतुष्टयम् ॥ ४५ ॥

सर्वाङ्गसुन्दरं देवं सर्वाभरणभूषितम् ।
रत्ननद्याः समुद्धृत्य सर्वरत्नैश्च राचितम् ॥ ४६ ॥

रुक्मिणी सत्यभामा च वामदक्षे च तिष्ठती ।
रत्नकुम्भेन रत्नेन सिंचन्ती परया मुदा ॥ ४७ ॥

कालिन्दी ऋक्षजा रत्नं दिशन्त्यौ कलशौ तयोः ।
नाग्नजीति सुनन्दा च मित्रविन्दा सुलक्षणा ॥ ४८ ॥

आनीय रत्नकलशं रत्ननद्याः समुद्धृतम् ।
दिशन्त्यः सर्वमांगल्यं संपन्ना महिषी हरेः ॥ ४९ ॥

ततः षोडशसाहस्रं सिंचन्त्यः परितः श्रियः ।
गीतैर्नृत्यैश्च वाद्यैस्तु मुमुदुः सर्वदेवताः ॥ ५० ॥

एवं हरिं स्मरन् मन्त्री चतुर्लक्षं जपेन्मनुम् ।
जपान्ते पायसैर्दिव्यैर्जुहुयात्तद्दशांशतः ॥ ५१ ॥

तर्पयेत्तद्दशांशेन भक्तितश्चेन्दुमज्जलैः ।
अभिषिच्य दशांशेन ब्राह्मणानपि भोजयेत् ॥ ५२ ॥

कर्णिकायां लिखेद् बीजं सम्भाध्यं तद्बहिर्लिखेत् ।
शेष - सप्तदशार्णेन वह्नेर्गेहयुतं ततः ॥ ५३ ॥

वृत्ताद् बहिरष्टदलं चतुरस्रं सवज्रकम् ।
चतुर्द्वारसमायुक्तं पंचमेन सुलक्षणम् ॥ ५४ ॥

पूर्वदक्षिणपाश्चात्य - कोणे मायां विलिख्य तु ।
श्रीबीजमन्यतो लेख्यं षडर्णं कोणगं तथा ॥ ५५ ॥

पत्रे तु कामगायत्री त्रिंशस्त्रिशो विभागशः ।
कामदेवाय विद्महे पुष्पबाणाय धीमहि तन्नोऽनङ्गः प्रचोदयात् ॥५६॥

इत्युक्त्वा कामगायत्रीं समस्तजनमोहिनीम् ।
कामायजायाद्स्यास्तु सर्वकर्माणि साधयेत् ॥ ५७ ॥

दलमध्ये लिखेत् काममनुं षट्शः क्रमेण तु ।
नमोऽन्ते कामदेवाय सर्वान्ते जनप्रियाय च ॥ ५८ ॥

सर्व सम्मोहनायेति ज्वलेति च दीपयेत् ।
सर्वजनस्य शब्दान्ते हृदयं मम वशं वदेत् ॥ ५९ ॥

कुरुद्वयं तथा चोक्त्वा स्वाहान्तो मनुरीरितः।
प्रोक्तः प्रद्युम्नमंत्रोऽयं कामाद्यः साधको मुने॥ ६० ॥

हाटकारचिते पात्रे भूर्जे वा प्रविलिख्य च।
धारयेत् साधितं यन्त्रं जयसेकसमन्वयात्॥ ६१ ॥

अस्य धारणमात्रेण सर्वजनवशं नयेत्।
राजानो वशितां यान्ति दासवच्छात्रवं कुलम्॥ ६२ ॥

त्रैलोक्यमोहनो मंत्रः सर्वलोकैकपूजितः।
अस्मिन्मन्त्रे समावाह्य राजराजेश्वरं हरिम्॥ ६३ ॥

पूजयेच्छक्तितो मन्त्री सर्वराजोपचारकैः।
कोणपट्के षडङ्गैस्तु तद्बहिश्च विदिग्दिशि॥ ६४ ॥

वासुदेवं संकर्षणं प्रद्युम्नं चानिरुद्धकम्।
सरस्वतीं तथा लक्ष्मीं रतिं प्रीतिं च दिग्दले॥ ६५ ॥

तद्बहिरष्टमहिषी रुक्मिण्याद्याः प्रपूजयेत्।
इन्द्रनील - मुकुन्दाख्यान् मकरानन्दकच्छपान्॥ ६६ ॥

शंखपद्मरनिधी चापि तद्बहिः पूजयेत्ततः।
इन्द्रादीन् स्वदिक्ष्वेवं वज्रादींस्तदनन्तरम्॥ ६७ ॥

इति पट्कावृतियुतमच्युतं भक्तितोऽर्चयेत्।
संसारसागरं घोरं वासनानक्रसंकुलम्॥ ६८ ॥

संतीर्य्य परमं धाम मंत्री याति न चान्यथा।
चतुर्लक्षं जपेन्मन्त्रं दशांशं पायसैर्हुनेत्॥ ६९ ॥

अथवा पंकजैः फुल्लैः शेषमात्मानमापयेत्।
उद्वास्य हृदये विष्णुं न्यस्य न्यासान् यथोदितान्॥ ७० ॥

अयुतं प्रजपेन्मन्त्रमष्टोत्तरशतं पुनः।
तन्मयो विहरेन्मंत्री तीर्णसंसारसागरः॥ ७१ ॥

अयुतं रक्तपद्मैस्तु हुत्वा विश्वं वशं नयेत्।
तद्भस्म धारयेद्भाले संस्मरेद्यं निरीक्षयेत्॥ ७२ ॥

यैः संस्पृष्टो वीक्ष्यते यैर्भवन्ति तस्य किंकराः।
आरक्तहयमारैस्तु राजानो दासवद्वशी॥ ७३ ॥

शुक्लादिवस्त्रलाभाय शुक्लादिकुसुमैर्हुनेत्।
हुनेद्धान्यसमृद्ध्यै च आरक्तां धान्यमंजरीम्॥ ७४ ॥

श्रीकृष्णकुसुमैर्होमात् सदा लक्ष्मीः प्रसीदति ।
बिल्वपत्रैश्च जुहुयात् पुत्रपौत्रानुगामिनीम् ॥ ७५ ॥
लभते लक्ष्मीं न संदेहः सुखं सर्वातिशायि च ।
लभते नात्र संदेहस्तत्फलै राज्यमाप्नुयात् ॥ ७६ ॥
केवलं घृतहोमेन जाड्यं तेजः प्रजायते ।
घृततंडुलहोमेन बलवान् जायतेऽचिरात् ॥ ७७ ॥
आयुर्वृद्धिं यशो लक्ष्मीं वश्यतां सर्वयोषिताम् ।
भक्ष्यभोज्यादिकं हुत्वा भोगी स्याद्यावदायुषः ॥ ७८ ॥
अष्टादश - दशार्णयोः प्रयोगानत्र वाऽऽचरेत् ।
अत्रेरितः प्रयोगस्तु ताभ्यामेव च कारयेत् ॥ ७९ ॥
रत्नाभिषेकं गोपालं योऽनेन विधिना भजेत् ।
सर्वैश्वर्यसमृद्धोऽसौ सर्वभुक् सर्वकारकः ॥ ८० ॥
देहत्यागे हरिं यायादित्येवं मुनयो जगुः ॥ ८१ ॥

इति श्रीगौतमीये महातंत्रे सर्वतंत्रोत्तमोत्तमे गौतमनारदसंवादे मंत्रोद्धार-प्रसंगो नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

# अथ चतुर्विंशोऽध्यायः

श्रीनारद उवाच—

अथातः संप्रवक्ष्यामि रुक्मिणीवल्लभं मनुम् ।
यज्ज्ञानात् सर्वलोकानां वल्लभो भुवि जायते ॥ १ ॥
नमोऽन्तो भगवान् ङेऽन्तो रुक्मिणीवल्लभस्तदा ।
स्वाहान्तस्तारसंयुक्तः षोडशार्णो महामनुः ॥ २ ॥
अस्य ज्ञानात्तथा मंत्री ज्ञानवाञ्जायतेऽचिरात् ।
ध्यानादष्टांगयोगस्य फलमाप्नोति निश्चितम् ॥ ३ ॥
स्मरणादस्य मंत्रस्य सर्वतीर्थफलं लभेत् ।
नारदोऽस्य मुनिः प्रोक्तश्छन्दोऽनुष्टुबुदाहृतम् ॥ ४ ॥
कृष्णो देवता चास्य रुक्मिणीवल्लभाह्वयः ।
व्यस्तैः समस्तैरंगानि पदैः कुर्यात् षडंगवित् ॥ ५ ॥
अतसीकुसुमश्यामं पीतवस्त्रयुगावृतम् ।
नानालंकारसुभगकौस्तुभोद्भासिवक्षसम् ॥ ६ ॥
श्रीवत्सलाञ्छनं श्रीमद्रत्नाभरणभूषितम् ।
द्वारकावरगेहस्थं रत्नसिंहासने शुभे ॥ ७ ॥
रुक्मिण्यायमधुरं शंखचक्रगदांबुजम् ।
ध्यात्वैवं परमानन्दं लक्षमेकं जपेन्मनुम् ॥ ८ ॥
तदन्ते जुहुयान्मंत्री तिलैर्मधुरमिश्रितैः ।
पूजयेद्वैष्णवे पीठे दशाक्षरविधानतः ॥ ९ ॥
पलाशकुसुमैर्हुत्वा दिव्यज्ञानमवाप्नुयात् ।
पूर्ववत् तर्पणं कुर्य्यात् सर्वाभीष्टानि साधयेत् ॥ १० ॥
पुंडरीकायुतं हुत्वा श्रियमाप्नोत्ययत्नतः ।
केवलं घृतहोमेन जीवेद्वर्षशतं सुखी ॥ ११ ॥
इत्येवं रुक्मिणीनाथविधानं मुनिपूजितम् ।
भोगमोक्षकरं यस्मान्मुने त्वमपि गोपय ॥ १२ ॥
प्रणवं नमसश्चांते वदेद् भगवते पदम् ।
नन्दपुत्रपदं ङेऽन्तं वन्देन्नन्दवपुस्तथा ॥ १३ ॥
भूत्यन्ते दशवर्णश्च मनुः सर्वार्थसाधकः ।
नारदो मुनिराख्यातश्छन्द उक्तो विराडपि ॥ १४ ॥

श्रीकृष्णो देवता चास्य चतुर्वर्गफलप्रदः ।
पञ्चाङ्गानि मनोरस्य आचक्राद्यैः प्रकल्पयेत् ॥ १५ ॥
ध्यायेद् वृन्दावने रम्ये गोपगोपीगणावृते ।
नानालंकारसुभगं तारहारविराजितम् ॥ १६ ॥
एवं यजेद् देवदेवं पंचाङ्गैश्चादिशाधिपैः ।
तदस्त्रैरपि संपूज्य जपेल्लक्षं व्रते स्थितः ॥ १७ ॥
दशांशं जुहुयान्मंत्री पायसैर्मधुराप्लुतैः ।
एवं संसिद्धमंत्रस्तु सर्वकर्माणि साधयेत् ॥ १८ ॥
तिलाज्येनायुतं हुत्वा ग्रहरोगान् विनाशयेत् ।
पलाशकुसुमैर्हुत्वा वागीशसमतां व्रजेत् ॥ १९ ॥
प्रणवं श्रीस्मरं मायां नमो भगवते पदम् ।
नन्दपुत्रपदं तत्र श्रीश्वरो मुखवृत्तयुक् ॥ २० ॥
मोसंपत्रपदं पुः ङेन्तं मनुर्विंशतिवर्णकः ।
नमः पदोऽस्यमुनिः प्रोक्तो विराट् छन्द उदीरितः ॥ २१ ॥
देवता नन्दतनयः सर्वलोकैकनन्दनः ।
पंचांगानि मनोरस्य आचक्राद्यैः प्रकल्पयेत् ॥ २२ ॥
नवीननीरदश्यामं पद्मपत्रनिभेक्षणम् ।
मुक्तादामलसत्कण्ठं केयूरांगविभूषणम् ॥ २३ ॥
अनेकरत्नसंबद्ध - स्फुरन्मकरकुण्डलम् ।
उदारकौस्तुभोद्भासिवक्षः-श्रीवत्सलाञ्छनम् ॥ २४ ॥
बर्हिबर्ह-कृतोत्तंसं गोपगोपीगणावृतम् ।
ध्यात्वैवं परमात्मानं जपेन्मनुवरं ततः ॥ २५ ॥
चतुर्लक्षजपान्ते तु दशांशं रक्तपंकजैः ।
होमयेच्छेषमन्यत्तु पूर्ववत् सुसमाचरेत् ॥ २६ ॥
दशार्णयन्त्रे विश्वेशं समावाह्य प्रपूजयेत् ।
प्रथमावृत्तिरंगैः स्यान्महिषीभिः द्वितीयिका ॥ २७ ॥
तृतीया दिगधीशैस्तु वज्राद्यैस्तु चतुर्थिका ।
एवं यः पूजयेत् कृष्णं चतुर्थावृत्तिसंयुतम् ॥ २८ ॥
धर्मार्थकाममोक्षाणां सम्पूर्णं लभते फलम् ।
पायसैरयुतं हुत्वा महाधनपतिर्भवेत् ॥ २९ ॥
पुत्रायुर्लभते मंत्री वाऽयुतं घृतहोमतः ।
पूर्ववल्लक्षहोमेन जीवेद्वर्षशतं सुधीः ॥ ३० ॥

इत्येष कथितो मंत्रः सर्वेषां सर्वसिद्धिदः ।
अथापरं प्रवक्ष्यामि मनुं सर्वसमृद्धिदम् ॥ ३१ ॥
यज्ज्ञात्वा मुनयः सर्वे भोगमोक्षैकभूमयः ।
लीलादण्डधरं चोक्त्वा गोपीजनपदं ततः ॥ ३२ ॥
संसक्तदोर्दण्डपदं मेघश्यामपदं ततः ।
विष्णो स्वाहेति मंत्रोयं . समस्तपुरुषार्थदः ॥ ३३ ॥
नारदोऽस्य मुनिः प्रोक्तश्छन्दोऽनुष्टुबुदाहृतम् ।
श्रीकृष्णदेवता चास्य सर्वविश्वात्मसाधकः ॥ ३४ ॥
पदैः पंचांगक्लृप्तिः स्यादतो ध्यायेदथाच्युतम् ।
तापिच्छकुसुमश्यामं सदा षोडशवार्षिकम् ॥ ३५ ॥
गोपीमध्यस्थित ताभ्यामालिंगितं कामलिप्सया ।
सर्वालंकारसुभगं पीताम्बरधरं परम् ॥ ३६ ॥
भुवनैकगुरुं . ध्यायेल्लक्षमेकं जपेन्मनुम् ।
दशांशं कमलैर्हुत्वा शेषमन्यत समापयेत् ॥ ३७ ॥
तर्प्पयेन्नित्यशो देयं दुग्धबुद्ध्या शुभैर्जलैः ।
मंडलाद्वाञ्छिता सिद्धिर्भवेद्धनपतिस्तथा ॥ ३८ ॥
य इमं भजते मन्त्रं जपेद्वामादितत्परः ।
वांछितानि हिताल्लब्ध्वा देहान्ते तत्पदं व्रजेत् ॥ ३९ ॥
वेदादि - कमलामाया - कामबीजादयो व्रजेत् ।
श्रीकृष्णं च पदं ङेन्तं गोविन्दं च तथा वदेत् ॥ ४० ॥
बीजैः पदैश्च पञ्चांगं कृत्वा ध्यायेदथाच्युतम् ।
गोपीजनपदस्यान्ते वल्लभं ङेऽन्तमीरयेत् ॥ ४१ ॥
कामं च चरमं बीजं संप्रोक्तो मंत्रनायकः ।
सिद्धगोपालमंत्रोऽयं सर्वसिद्धिप्रदो नृणाम् ॥ ४२ ॥
पक्षिराजकृतच्छायौ सुरद्रुमतलासिनौ ।
शंखेन्दुकृताभासौ दध्युत्थपायसाशिनौ ॥ ४३ ॥
अलकैरावृतमुखौ ग्रहयुक्तौ यथा विधू ।
नानालंकारसुभगौ कौस्तुभामुक्तकंधरौ ॥ ४४ ॥
तारहारावलीरम्यौ सर्वाश्चर्यमयौ शिशू ।
त्रैलोक्यशरणौ श्रीमद्रामकृष्णौ स्मरञ्जपेत् ॥ ४५ ॥
लक्षमेकं मनुवरं दशांशं श्रीफलैर्हुनेत् ।
होमान्ते विरमेन्मंत्री शेषमन्यत् समापयेत ॥ ४६ ॥

दशाक्षरोदितः पीठे वक्ष्यमाणेन पूजयेत् ।
षडंगं केसरे यष्ट्वा दिगीशान्प्रहरणान्यपि ॥ ४७ ॥
एवं त्रयावृत्तिमयं संपूज्य पुरुषोत्तमम् ।
दुग्धबुद्धया जलैर्नित्यं तर्पयेदिष्टसिद्धिदम् ॥ ४८ ॥
मुखं करं सदा योज्य जपाद्वाग्मी कविर्भवेत् ।
नवनीतायुतं हुत्वा धरापरिवृतो भवेत् ॥ ४९ ॥
रविवारेऽश्वत्थमूले अष्टोत्तरशतं जपेत् ।
पुत्रैर्मित्रैश्च सम्पन्नो म्रियते नापमृत्युतः ॥ ५० ॥
अथापरं मनुवरं कथयामि समृद्धिदम् ।
लक्ष्मीमायाकामबीजैर्दशार्णं पुटयेत् क्रमात् ॥ ५१ ॥
षोडशार्णो मनुः साक्षान्महालक्ष्मीं प्रयच्छति ।
ब्रह्मा ऋषिः समुद्दिष्टो गायत्रीछन्द ईरितः ॥ ५२ ॥
महासम्पत्प्रदः श्रीमान् देवता कृष्ण ईरितः ।
दशार्णवदस्य वक्ष्यन्ध्यायेद्देवमनन्यधीः ॥ ५३ ॥
कालाभ्रनिचयप्रख्यं पाणिपादाम्बुजारुणम् ।
तारहारावलीरम्यं कौस्तुभामुक्तवक्षसम् ॥ ५४ ॥
किरीटकेयूरग्रैवेय - कंकणोर्मिविराजितम् ।
ध्यायेन्द्रत्नगृहान्तस्थ - रत्न पंकजमध्यगम् ॥ ५५ ॥
चतुर्लक्षं जपेन्मन्त्रं पायसैरयुतं हुनेत् ।
तर्पणादीनि सर्वाणि पूर्वोक्तविधिना चरेत् ॥ ५६ ॥
य एवं भजते मन्त्री लक्ष्मीगोपालविग्रहम् ।
स सर्वाः सम्पदो लब्ध्वा यात्यानन्त्यमयत्नतः ॥ ५७ ॥

इति श्रीगौतमीये महातंत्रे सर्वतंत्रोत्तमे गौतमनारदसंवादे मंत्रोद्धारप्रसंगो नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

---

# अथ पञ्चविंशोऽध्यायः

नारद उवाच—

अथापरं प्रवक्ष्यामि मन्त्रराजं सुदुर्लभम् ।
अवापुर्येन जाप्येन दिव्यज्ञानं मुनीश्वराः ॥ १ ॥
भ्रष्टराज्यः सुरश्रेष्ठो ह्यवाप यदुपासनात् ।
अन्येऽपि बहवो देवा भ्रष्टाधिकारितां गताः ॥ २ ॥
त्रिमात्रह्वद्भगवते श्रीगोविन्दायेतितन्मनुः ।
द्वादशाक्षर इत्युक्तो मन्त्रः सर्वार्थसिद्धिदः ॥ ३ ॥
नारदोऽस्य मुनिः प्रोक्तो विराट् छन्द उदीरितः ।
श्रीकृष्णो देवता प्रोक्तः सर्वदेवनमस्कृतः ॥ ४ ॥
विनियोगोऽस्य मन्त्रस्य पुरुषार्थचतुष्टये ।
व्यस्तैः पदैः समस्तैश्च पंचांगानि प्रकल्पयेत् ॥ ५ ॥
सृष्टिसंहृतिस्थित्या च करशोधनमाचरेत् ।
स्थित्यन्तं दशतत्त्वं च मातृकां मनुसंपुटाम् ॥ ६ ॥
तत्त्वन्यासं तथा कृत्वा केशवादिपुरःसरम् ।
जनिपालनसंहार - विधिनैकविशारदम् ॥ ७ ॥
कलायकुसुमश्यामं नीलेन्दीवरलोचनम् ।
अनेकरत्नाभरणं दीप्तविश्वावकाशकम् ॥ ८ ॥
तथैवासनसंस्थं च पीतवस्त्रयुगावृतम् ।
श्रीवत्सलक्षणं देवं कौस्तुभोद्भासिवक्षसम् ॥ ९ ॥
वेणुवाद्यनिनादेन मोहयन्तं चराचरम् ।
मुनिवृन्दैर्देववृन्दै ऋषिवृन्दैस्तु संस्तुतम् ॥ १० ॥
आवृतं महिषीवृन्दैर्निधिभिः परिवेष्टितम् ।
अथवा तप्तहेमाभं कांत्या क्रान्तजगत्त्रयम् ॥ ११ ॥
कल्पद्रुमलतासीनं रत्नसिंहासनोपरि ।
ध्यात्वा जपेन्मनुवरं लक्षद्वादशमादरात् ॥ १२ ॥
वार्ताकर्णनमात्रं हि स्त्रीणां त्यक्त्वा वनेस्थितः ।
पयोमूलफलाशी वा पूर्वोक्ताचारपालकः ॥ १३ ॥
दशांशं जुहुयाद् भक्त्या कुसुमैर्ब्रह्मवृक्षजैः ।
ततः पूर्वोक्तविधिना शेषमन्यत् समापयेत् ॥ १४ ॥

गोपुच्छे निष्ठितं देवं पुण्यारण्येऽथवा तथा ।
प्रासादे वा प्रतिष्ठाप्य पूजयन् भोगमोक्षभाक् ॥ १५ ॥

वृन्दावनगतं ध्यायेन्माणिक्यमयमण्डपे ।
सामान्यार्घं विशोध्याथ पूजयेद् द्वारपालकान् ॥ १६ ॥

वीराग्रेऽवनिपीठे च पक्षीन्द्रं परिपूजयेत् ।
जयं च विजयं चैव बलप्रबलसंज्ञकौ ॥ १७ ॥

चंडं प्रचंडमथ च धातारं च विधातारम् ।
द्वारे पूर्वादिदिग्देवतान् प्रादक्षिण्येन पूजयेत् ॥ १८ ॥

द्वारार्द्धे द्वारश्रियं यष्ट्वा देहल्यां देहलीं यजेत् ।
द्वारस्य पार्श्वयोस्तद्वद् गंगां च यमुनां तथा ॥ १९ ॥

विघ्नेशं क्षेत्रपालं च तयोः पार्श्वे प्रपूजयेत् ।
सर्षपाक्षतान् समादाय विघ्नमुत्सार्य बाह्यतः ॥ २० ॥

पादघातकरास्फोट - समुद्भवित्तवक्त्रकैः ।
विघ्नं त्रिविधमुत्सार्य अस्त्रमंत्रेण मंत्रवित् ॥ २१ ॥

कोणेषु विघ्नं दुर्गां च वाणीं क्षेत्रं समर्चयेत् ।
अर्चयेद्वास्तुपुरुषं गृहमध्ये समाहितः ॥ २२ ॥

तारं शार्ङ्गपदं ङेऽन्तं सपूर्वं च शरासनम् ।
गफद्गम इत्युक्त्वा मुद्रया प्रथितो हरेः ॥ २३ ॥

विधेयमेतत् सर्वत्र स्थापिते तु विशेषतः ।
आसनेपूपविष्टं तन्मंत्रेण च विधानवित् ॥ २४ ॥

न्यासान्न्यस्य स्वदेहे तु आत्मयागावसानकम् ।
दशाक्षरोक्तविधिना पीठं संपाद्य पूजयेत् ॥ २५ ॥

नारदादिगुरूनिष्ट्वा महाभागवतान् यजेत् ।
गुकारं मरणं विद्यादुकारं तद्विशोधकः ॥ २६ ॥

गुरुरित्येव मुनिभिः प्रोक्ता कृष्णैकयोग्यता ।
नारदं पर्वतं जिष्णुं निशठोद्धवदारुकम् ॥ २७ ॥

विष्वक्सेनं च शैलेयं वाय्वादीशानमर्चयेत् ।
गुरून् परगुरूंश्चापि परमेष्ठिगुरूंस्तथा ॥ २८ ॥

परापरगुरूंस्तद्वत् पूर्वसिद्धाद्नंतरम् ।
सनकश्च सनन्दश्च सनत्कुमारसंज्ञकः ॥ २९ ॥

सनातन इत्यादिकान् परान् भागवतांस्तथा।
गुरुनाम प्रकृत्यैव पादुकाभ्यो नमो वदेत् ॥ ३० ॥

अपायात् पातु नियतं दुःसंगाद् दुर्निमित्तकात्।
कामनार्थं प्रदानाच्च पादुका परिकीर्त्यते ॥ ३१ ॥

गत्यर्थचरधातुस्तु णश्चाप्यानन्दं उच्यते।
आनन्दं प्राप्यते यस्मात्तस्माच्चरणमुच्यते ॥ ३२ ॥

पीठपूजां विधायाथ तत्रावाह्य हरिं यजेत्।
सर्वोपचारान् कृत्वाऽन्ते षडंगाकृतिमर्चयेत् ॥ ३३ ॥

रुक्मिणीं सत्यभामां च दक्षवामे प्रपूजयेत्।
वासुदेवं संकर्षणं प्रद्युम्नं चानिरुद्धकम् ॥ ३४ ॥

कालिन्दीं नाग्नजितीमथ सुशीलां सुनन्दकाम्।
ऋक्षजां लक्ष्मणां चैव इत्यष्टौ महिषीः स्मृताः ॥ ३५ ॥

कौमोदकीं पांचजन्यं वसुदेवं च देवकीम्।
नन्दगोपं यशोदां च संपूज्य तदनन्तरम् ॥ ३६ ॥

किंकिणीं च तथाऽभ्यर्च्य दामादीनथ पूजयेत्।
दिगधीशांश्च स्वदिक्षु गजानष्टौ तथार्चयेत् ॥ ३७ ॥

कुमुदः कुमुदाक्षश्च पुंडरीकोऽथ वामनः।
शंकुकर्णः सर्वनेत्रः सुमुखः सुप्रतिष्ठतः ॥ ३८ ॥

एककालं द्विकालं वा त्रिकालं श्रद्धयान्वितः।
मंत्रवित् कृष्णमभ्यर्च्य भोगमुक्त्योश्च भाजनम् ॥ ३९ ॥

गोष्ठे वा शैलशृंगे वा पुण्यारण्ये नदीतटे।
प्रदेशे स्थापयेत् कृष्णं कोटितीर्थफलं लभेत् ॥ ४० ॥

कोटिकोटिमहायज्ञात् कोटितीर्थपरिभ्रमात्।
तत्फलं लभते भक्त्या प्रतिष्टाप्य तु केशवम् ॥ ४१ ॥

यावज्जन्म हरेर्नामग्रहणे यत्फलं भवेत्।
तत्फलं समवाप्नोति संस्थाप्य पुरुषोत्तमम् ॥ ४२ ॥

मंत्रकोटिजपाद् यद्वा यत् फलं पुरुषो लभेत्।
तत् फलं समवाप्नोति संस्थाप्य पुरुषोत्तमम् ॥ ४३ ॥

कोटियज्ञेन यत् पुण्यं पुण्यारण्या-निषेवणात्।
तत्फलं लभते मर्त्यस्तद्वत् संस्थाप्य केशवम् ॥ ४४ ॥

सूर्यग्रहे कुरुक्षेत्रे गोदानायुतजं फलम् ।
तत्फलं लभते भक्त्या संस्थाप्य पुरुषोत्तमम् ॥ ४५ ॥

सत्यः शार्ङ्गिसुसंयुक्तः कामः पंचस्वरान्वितः ।
मासान्ते मासनाथाय नमोऽग्रतो मंत्र ईरितः ॥ ४६ ॥

नारदोऽस्य मुनिः प्रोक्तश्छन्दोऽनुष्टुबुदाहृतम् ।
अत्र गोवल्लभः कृष्णो देवता परिकीर्तितः ॥ ४७ ॥

पंचांगानि मनोरम्य आचक्रादीनि कल्पयेत् ।
ध्यायेद्वृन्दावने कृष्णं गोपं शिशुगणावृतम् ॥ ४८ ॥

तारहारवेत्रशृङ्ग - वक्त्र - विश्वविमोहनम् ।
बहुरत्नसमाबद्ध - किंकिणीहारनूपुरम् ॥ ४९ ॥

एवं ध्यात्वा जपेन्मन्त्रं लक्षमात्रं समाहितः ।
होमयेत्तद्दशांशेन पायसैर्मधुरान्वितैः ॥ ५० ॥

अंगेन्द्रवज्रादिमुखैरित्यर्चनविधिः स्मृतः ।
य एनं पूजयेन्मंत्री भक्त्या गोवल्लभं हरिम् ॥ ५१ ॥

स गोगणवरैर्युक्तः सर्वैश्वर्यसमृद्धिमान् ।
देहान्ते भगवद्धाम प्राप्नुयान्नात्र संशयः ॥ ५२ ॥

ऊर्ध्वदन्तयुतः खान्तो वातं मासद्वयं तथा ।
भीपणामुखवृत्तेन वीतिहोत्रसखान्वितः ॥ ५३ ॥

कामबीजं मुखे दद्यात् सर्वार्थसंप्रसाधकः ।
लुप्तबीजाश्च ये मंत्रा गोपालस्य कचित्त कचित् ॥ ५४ ॥

कामबीजं मुखे दद्यात्तेषां सर्वार्थसिद्धये ।
नारदोऽस्य मुनिः प्रोक्तो गायत्रीछन्द ईरितम् ॥ ५५ ॥

श्रीकृष्णो देवता चास्य समस्तपुरुषार्थदः ।
पंचांगानि मनोरस्य आचक्राद्यैः प्रकल्पयेत् ॥ ५६ ॥

कलायकुसुमश्यामं नीलेन्दीवरलोचनम् ।
तृणालंकारसुभगं बालकं पंचहायनम् ॥ ५७ ॥

दध्युत्थं पायसैः स्फीतं कराभ्यां दधतं हरिम् ।
तारहारावलीरम्यं गोपगोपीगणावृतम् ॥ ५८ ॥

ध्यात्वैवं परमानन्दं सृष्टिस्थित्यन्तकारिणम् ।
अर्कलक्षं जपेन्मंत्रं दशांशं पायसैर्हुनेत् ॥ ५९ ॥

अथवा पङ्कजैर्हुत्वा सिद्धमंत्रो भवेत् सुधीः ।
दशाक्षरोदिते पीठे तद्विधानेन पूजयेत् ॥ ६० ॥

अर्वागिन्द्र-वज्रादि पूजा चास्य समीरिता ।
नवनीतायुतं हुत्वा सर्वसिद्धेश्वरो भवेत् ॥ ६१ ॥

पुत्राप्तिश्चम्पकैर्होमात् पाटलै राजवश्यता ।
अन्नाद्यैर्होमतो नित्यं लक्ष्मीस्तस्य गृहे स्थिता ॥ ६२ ॥

पूर्वोक्ततर्पणेनैव सर्वाभीष्टानि साधयेत् ॥ ६३ ॥

इति श्रीगौतमीये महातन्त्रे सर्वतंत्रोत्तमोत्तमे मंत्रोद्धारप्रसंगो नाम
पञ्चविंशोऽध्यायः ॥ २५ ॥

---

# अथ षड्विंशोऽध्यायः

श्रीनारद उवाच—

कामश्चाष्टस्वरारूढः, सर्गवान्मन्त्रनायकः ।
कृष्णेति द्व्यक्षरः प्रोक्तः कामपूर्वो गुणाक्षरः ॥ १ ॥
कामाद्यन्तश्चतुर्वर्णश्चतुर्वर्ग - फलप्रदः ।
ङेऽन्तः कृष्णो नमोऽन्तश्च पञ्चवर्णो महामनुः ॥ २ ॥
स एव कामपूर्वश्चेत् षडक्षरमनुः स्मृतः ।
एनं जप्त्वा त्रिकालज्ञः शातातपमुनीश्वरः ॥ ३ ॥
अस्य संस्मरणादेव सार्वज्ञ्यं कवितां पराम् ।
लभते नात्र सन्देहः सत्यं सत्यं हि मद्वचः ॥ ४ ॥
कृष्णगोविन्दकौ ङेऽन्तौ कामाद्योऽष्टाक्षरो मनुः ।
आद्यन्ते कामबीजश्चेन्नवाक्षरमनुर्मतः ॥ ५ ॥
सुप्रसन्नात्मने वह्निवल्लभासमवर्णकः ।
कामबीजं धराबीजं पुनः कामं समुच्चरेत् ॥ ६ ॥
श्यामलांगपदं ङेऽन्तं नमोऽन्तोऽयं दशाक्षरः ।
एतेषां मनुवर्णानां नारदो मुनिरीरितः ॥ ७ ॥
उक्तं श्छन्दस्तु गायत्री बालकृष्णोऽस्य देवता ।
षड्दीर्घभाजा कामेन षडंगानि समाचरेत् ॥ ८ ॥
नीलपद्मसमानाक्षं बालं श्यामलविग्रहम् ।
नानारत्नसमाबद्धं सुवस्त्राभरणान्वितम् ॥ ९ ॥
रक्तपद्मसमासीनं दध्युत्थं पायसं वरम् ।
दधतं करपद्माभ्यां गोपालशिशुविग्रहम् ॥ १० ॥
गोपालबालकैः सार्द्धं जपेल्लक्षं यथाविधि ।
तदन्ते विधिवज्जुहुयाद्दशांशं श्रीफलैर्नरः ॥ ११ ॥
एवं विचिन्त्य प्रजपेद् द्वितीया तु दिगीश्वरैः ।
दशाक्षरोदिते पीठे विधिना पूजयेद्धरिम् ॥ १२ ॥
तृतीया तत्प्रहरणैः सर्वास्तु सर्वकामदाः ।
अयुतं बिल्वपुष्पैस्तु हवनाल्लभते नरः ॥ १३ ॥
तेजो वीर्यं तथा कान्तिं लक्ष्मीं सर्वातिशायिनीम् ।
रक्ताब्जायुतहोमेन राजा तस्यास्य किंकरः ॥ १४ ॥

विल्वपत्रैस्तथा हुत्वा लभेद्राज्यमकंटकम् ।
एतेषां मनुवर्याणामेकं यो भजते सुधीः ॥ १५ ॥
इह भुक्त्वा वरान् भोगान् देहान्ते तत्पदं व्रजेत् ।
अथापरं मनुवरं वक्ष्ये सर्वसमृद्धिदम् ॥ १६ ॥
स्मरणाद्यस्य मंत्रज्ञो वागीशसमतां व्रजेत् ।
देवानामीश्वरः शक्रो धनदो धनदायकः ॥ १७ ॥
स्मरणाद्यस्य मंत्रस्य किं किं तस्य न सिद्ध्यति ।
वाग्भवं कामबीजं च मायां लक्ष्मीमनंतरम् ॥ १८ ॥
दशार्णमनुवर्यश्च भवेच्छक्काक्षरो मनुः ।
वाग्भवाद्यो यदा चाद्यं मन्त्री त्रिवाक्पतिसन्निभः ॥ १९ ॥
वेदवेदांगवेदांतमतिरत्युज्ज्वला भवेत् ।
अमृतस्यंदिनी वाचा कविता सर्वजित्वरी ॥ २० ॥
सर्ववाङ्मयवेत्ता च सर्वज्ञो जायतेऽचिरात् ।
संविदाद्यं यदा मन्त्रं साधको यदि वाऽभ्यसेत् ॥ २१ ॥
अचिरात् सर्वसिद्धीनामाधपो जायते ध्रुवम् ।
राजानो वश्यतां यांति सामान्यैः सपरिच्छदैः ॥ २२ ॥
देवाः सर्वे नमस्यन्ति किं पुनः कथ्यते परम् ।
श्रीबीजाद्यं यदा जप्याद् भक्तितो मंत्रनायकम् ॥ २३ ॥
अनन्या वै रमा तस्य मन्दिरे संपदावहा ।
तस्य वंशे स्थिरा लक्ष्मीर्यावदाभूतसंप्लवम् ॥ २४ ॥
कामपूर्वो यदा मंत्रो जप्यते साधकोत्तमैः ।
त्रैलोक्यं वश्यतामेति मनोवाक्कायकर्मभिः ॥ २५ ॥
स्त्रीणां कन्दर्पसदृशो दर्शनादेन मोहकृत् ।
चमत्कारकरो लोके जीवेद्वर्षशतं सुखी ॥ २६ ॥
ऋषिर्ब्रह्माऽस्य मंत्रस्य गायत्रीछन्द ईरितम् ।
देवता सर्वजगतां मोहनः कृष्ण ईरितः ॥ २७ ॥
पंचांगानि मनोरस्य आचक्राद्यैः प्रकल्पयेत् ।
सृष्टिसंहारस्थितिभिर्दशवर्णान् करे न्यसेत् ॥ २८ ॥
तारसंपुटितान् कृत्वा मनोर्मध्यगतानपि ।
दशवर्णान्न्यसेत् स्थाने दशवर्णान् विनिर्दिशेत् ॥ २९ ॥
केशयादि तथा तत्त्वं दशतत्त्वं क्रमात् क्रमात् ।
ऋष्यादिन्यासमापाद्य पञ्चाङ्गन्यासमाचरेत् ॥ ३० ॥

कामाक्षरं परं बीजं स्वाहा प्रकृतिरीश्वरी ।
केवलं चित्कलाशक्तिर्मन्त्राधिष्ठातृदेवता ॥ ३१ ॥

ध्यायेद् वृन्दावने रम्ये कांचनीभूमिमध्यगे ।
नानावृक्षलताकीर्णे वृक्षखण्डैश्च मंडिते ॥ ३२ ॥

कल्पतरोस्तले सम्यक् श्रीमन्माणिक्यमंडपे ।
देवकिन्नरगंधर्वमुनिभिः परिसेविते ॥ ३३ ॥

नारदाद्यैर्मुनिश्रेष्ठैर्मुनिभिः समुपस्थिते ।
रत्नसिंहासने ध्यायेन्निविष्टं पंकजोपरि ॥ ३४ ॥

सजलजलदश्यामं रक्तपद्मदलेक्षणम् ।
रक्तपद्मदलं पाणिपादाभ्यां परिमंडितम् ॥ ३५ ॥

नवरत्नसमाबद्धं भूषणैः परिभूषितम् ।
अमुक्तवक्षसि श्रीमत्कौस्तुभोद्भासिवक्षसम् ॥ ३६ ॥
तारहारावलीरम्यं श्रीवत्सांकितवक्षसम् ।
रोचनातिलकप्रान्ते कुंतलैरभिभासितम् ॥ ३७ ॥

कन्दर्पचापसदृशं चिल्लिमालविराजितम् ।
अनेकरत्नसम्बद्ध-स्फुरन्मकरकुण्डलम् ॥ ३८ ॥

बर्हिबर्हकृतोत्तंसं सर्वज्ञं सर्ववादिभिः ।
उपासितं मुनिगणैरुपतिष्ठेद्धरिं सुधीः ॥ ३९ ॥
एवं ध्यात्वा मनुवरं दशलक्षं व्रते स्थितः ।
दशाक्षरं विधानेन जपेत् सिद्धो भवेन्मनुः ॥ ४० ॥

सिद्धेनानेन मनुना सर्वाभीष्टानि साधयेत् ।
दशाक्षरोदिते पीठे तद्विधानेन पूजयेत् ॥ ४१ ॥
अयुतं जुहुयान्मंत्री कुसुमैर्त्रतवृक्षजैः ।
महाकविर्महाप्राज्ञो भवेन्मंत्री न संशयः ॥ ४२ ॥
मालतीकुसुमैर्होमाद्वाक्सिद्धिमतुलां लभेत् ।
तगरैः क्षीरसिक्तैश्च होमात् सर्वज्ञतां व्रजेत् ॥ ४३ ॥

बकुलैः कुसुमैर्होमात् स्त्रियमाप्नोति चेप्सिताम् ।
भक्ष्यभोज्यस्य होमेन समृद्धिमतुलां लभेत् ॥ ४४ ॥
केवलं घृतहोमेन ब्रह्मतेजः प्रजायते ।
श्रीफलस्य दलैर्हुत्वा राज्यमाप्नोत्ययत्नतः ॥ ४५ ॥

तत्कालं मन्त्रसिद्धिः स्याद् दूर्वाभिरायुषैर्हुनेत् ।
तर्प्पणं पूर्वविहितं कृत्वा सर्वं प्रसाधयेत् ॥ ४६ ॥
दशाक्षरोदितं सर्वं प्रयोगमनुना चरेत् ।
अथापरं प्रवक्ष्यामि मन्त्रं . सर्वार्थसाधकम् ॥ ४७ ॥
कृष्णेति द्व्यक्षरं मन्त्रं मध्यस्थं कामबीजयोः ।
सद्यः फलप्रदो मंत्रः कथितो भक्तितत्परैः ॥ ४८ ॥
अस्याराधनतः शक्रो देवेशत्वमवाप्तवान् ।
ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द ईरितम् ॥ ४९ ॥
देवता जगतामादिर्मुनिभिः कृष्ण ईरितः ।
दीर्घपट्केन कामेन षडंगविधिमाचरेत् ॥ ५० ॥
एवमंगविधिं . कृत्वा मन्त्री ध्यायेदथाच्युतम् ।
कलापकुसुमश्यामं द्रुतहेमनिभं तु वा ॥ ५१ ॥
पारिजातवने रम्ये रत्नसिंहासनोपरि ।
देहोत्थस्वप्रभाभिश्च भासयन्तं दिगन्तरम् ॥ ५२ ॥
शिशुवेशधरं देवं वासुदेवं जगन्मयम् ।
नानालंकारसुभगं गोपीभिः परिकीर्तितम् ॥ ५३ ॥
कल्पवृक्षविनिष्क्रान्तरत्नौघैः परिवेष्टितम् ।
तारहारावलीरम्यं पीताम्बरयुगावृतम् ॥ ५४ ॥
चतुर्लक्षं जपेन्मंत्रं व्रतस्थः साधकोत्तमः ।
दशांशं जुहुयादन्ते श्रीफलैः सर्वसिद्धये ॥ ५५ ॥
अष्टच्छदांबुजे देवमावाह्य परिपूजयेत् ।
अंगषट्कावृतैरन्ते पूजयेद् दिगधीश्वरान् ॥ ५६ ॥
तदस्त्राण्यपि चान्ते च सपर्य्यैषा समीरिता ।
नवनीतायुतं हुत्वा श्रियमाप्नोत्यनिन्दिताम् ॥ ५७ ॥
श्रीफलायुतहोमेन राज्याप्तिर्मन्त्रिणो भवेत् ।
धान्यमंजरिभिर्हुत्वा धान्यवान् जायतेऽचिरात् ॥ ५८ ॥
अन्नवानन्नहोमेन घृतहोमाच्छ्रियं लभेत् ।
य एवं भजते मन्त्री जपहोमादितत्परः ॥ ५९ ॥
स तु सम्यक् श्रियं लब्ध्वा देहान्ते तत्परं व्रजेत् ।
चूडामणिमथो वक्ष्ये मन्त्रराजं सुदुर्लभम् ॥ ६० ॥
यज्ज्ञानान्मुनयः सर्वे भूस्थास्त्रैलोक्यदर्शिनः ।
चतुर्वर्णस्य मंत्रस्य कामाधोवह्नियोगतः ॥ ६१ ॥

अयं शिखामणिः प्रोक्तस्त्रैलोक्यदर्शनक्षमः ।
नारदोऽस्य मुनिः प्रोक्तो विराट् छन्द उदीरितः ॥ ६२ ॥
श्रीकृष्णदेवता चास्य मुनिभिः परिकीर्तितः ।
षड्दीर्घयुक्तबीजेन कामेनांगक्रिया मता ॥ ६३ ॥
मंत्रं संपुटितं कृत्वा वर्णन्यासं समाचरेत् ।
दशतत्त्वं ततो न्यस्य करांगन्यासमंततः ॥ ६४ ॥
वृन्दावनगतं ध्यायेत् कल्पद्रूद्यानमध्यगम् ।
दोलायमानं गोपीभिः सुवर्णान्दोलिकागतम् ॥ ६५ ॥
सूर्यायुतसमाभासं लसन्मकरकुंडलम् ।
नानारत्नपरिभ्राजन्नानालंकारमंडितम् ॥ ६६ ॥
पंचवर्षावधिं बालं कुंडलोल्लासिसन्मुखम् ।
हसितोदारकान्त्या च भासयन्तं दिगन्तरम् ॥ ६७ ॥
इति ध्यात्वा जपेन्मंत्रं चतुर्लक्षं शिखामणिम् ।
तद्दशांशेन जुहुयात् पायसैरथवाम्बुजैः ॥ ६८ ॥
अगेंद्रवत्राधृतिभिः सम्यक् पूजनमीरितम् ।
ब्रह्मवृक्षोत्थकुसुमैर्हुनेदयुतमादरात् ॥ ६९ ॥
त्रिकालज्ञो भवेन्मंत्री नवनीतहुतादपि ।
श्रीफलस्य फलैर्होमाद् राज्यमाप्नोत्यसंशयः ॥ ७० ॥
लक्ष्मीमंत्रहुतान्मंत्री हुँहुँ लक्ष्मीमवाप्नुयात् ।
मूलमंत्रं त्रिकोणमध्ये ज्योतीरूपं विचिन्तयन् ॥ ७१ ॥
लक्षजापान्मनोरस्य त्रिकालज्ञो भवेन्नरः ।
करस्थामलकन्यायाद्विश्ववृत्तं च पश्यति ॥ ७२ ॥
हृदि सर्वजनानां च सर्वं पश्यति चक्षुषा ।
रविवारेऽश्वत्थमूले शतमष्टोत्तरं जपेत् ॥ ७३ ॥
एवं च नियतं कृत्वा म्रियते नापमृत्युभिः ।
वसुलक्षजपात्तत्र सर्वज्ञो जायतेऽचिरात् ॥ ७४ ॥

इति श्रीगौतमीये महातंत्रे सर्वतंत्रोत्तमे गौतमनारदसंवादे मंत्रोद्धारप्रसंगो नाम षड्विंशोऽध्यायः ॥ २६ ॥

# अथ सप्तविंशोऽध्यायः

श्रीनारद उवाच—

समस्तकृष्णमंत्राणामुद्दीपनकरं परम् ।
केवलं स्वत्प्रयत्नेन कथयामि मुने शृणु ॥ १ ॥
कामाक्षरं धरासंस्थं शक्ति बिन्दुविभूषितम् ।
त्रैलोक्यमोहनं विष्णुं कथितं तव सुव्रत ॥ २ ॥
आनन्दनारदश्चास्य ऋषिश्छन्दो विराडपि ।
त्रैलोक्यमोहनः प्रोक्तो देवता विष्णुरव्ययः ॥ ३ ॥
सर्वेषु कृष्णमंत्रेषु मंत्रोऽयं मंत्रनायकः ।
सृष्टिस्थितिं दशतत्त्वं मात्रिकां मनुसंपुटाम् ॥ ४ ॥
षड्दीर्घभाजा बीजेन करांगन्यासमाचरेत् ।
मूर्ध्नि भाले हृदि गुह्ये पादयोश्च यथाक्रमम् ॥ ५ ॥
पंचबाणस्य बीजानि न्यस्य ध्यायेदथाच्युतम् ।
धात्तौ रेफसमारूढावनन्तशान्तिभूषितौ ॥ ६ ॥
बिन्दुनादकलायुक्तौ बीजौ त्रैलोक्यमोहनौ ।
कामबीजं ततः पश्चाज्जलं धारासमन्वितम् ॥ ७ ॥
पंचमस्वरसंयुक्तं नाद बिन्दुसमन्वितम् ।
बीजान्येतानि चान्ते च चन्द्रः सर्गसमन्वितः ॥ ८ ॥
पोषणमोहनसंदीपनतापनोन्मथनान्य ।
नामानुरूपफलदान् पंचार्णमनुरप्यसौ ॥ ९ ॥
भंगविद्रुमसंकाशं सर्वतेजोमयं वपुः ।
किरीटिनं कुण्डलिनं केयूरवलयान्वितम् ॥ १० ॥
मुक्तावलीरत्नसम्बद्ध - तुलाकोटियुगान्वितम् ।
नानालंकारसुभगं शुक्लवासोयुगावृतम् ॥ ११ ॥
गरुडोपरिसंबद्ध-रत्नपंकजमध्यगम् ।
उत्तमहेमसंकाशं लक्ष्मीवामोरुसंस्थितम् ॥ १२ ॥
सर्वालंकारसुभगं शुक्लवासोयुगावृतम् ।
सकामा लीलया देवं मोहयन्ती पुनः पुनः ॥ १३ ॥
शंखचक्रगदापद्मपाशांकुशधनुःशरान् ।
[illegible] ॥ १४ ॥

लक्ष्मीं पद्मकरां वामे दक्षेणालिंगितं पतिम् ।
संस्थितं चिन्तयेन्मंत्री मोहिनीं विश्वमातरम् ॥ १५ ॥
एवं ध्यात्वा जगन्नाथं विंशत्यक्षरपीठके ।
समावाह्य यजेन्मंत्री ह्युपचारैरशेषतः ॥ १६ ॥
न्यासक्रमेण विधिवद् गंधपुष्पादिभिर्यजेत् ।
लक्ष्मीस्तद्वामतः पूज्या श्रीबीजेन विधानवित् ॥ १७ ॥
कौस्तुभं गलदेशे च किरीटं कुण्डलद्वयम् ।
श्रीवत्सं वक्षदेशे च वनमालां गलोपरि ॥ १८ ॥
सर्वतेजोमयायेति किरीटाय नमो वदेत् ।
नितंबे पीतवसनं पूजयेत् क्रमतः सुधीः ॥ १९ ॥
नाममंत्रेण विधिवत् कौस्तुभादीन् समर्चयेत् ।
लयांगमेवमभ्यर्च्य भोगांगमथ पूजयेत् ॥ २० ॥
पक्षीन्द्रमग्रे संपूज्य कुर्वन्तं स्तुतिमादरात् ।
केसरेषु षडंगानि कोणे मध्ये च दिक्षु च ॥ २१ ॥
अग्न्यादिदलमूले च वालादिपुरतो विभोः ।
पूर्वादिषु दलाग्रेषु प्रदक्षिणक्रमाद् यजेत ॥ २२ ॥
लक्ष्मीं सरस्वतीं चैव रतिं प्रीतिमनंतरम् ।
कीर्तिकांती तुष्टिपुष्टी तथास्त्राणि दलाग्रतः ॥ २३ ॥
बहिरिन्द्रादयः पूज्यास्तदस्त्राणि च तद्बहिः ।
एवं यः पूजयेन्मंत्री भक्त्या श्रीपुरुषोत्तमम् ॥ २४ ॥
करप्रवेया सर्वार्थास्तस्य स्युस्तत्परं यजेत् ।
रविलक्षं जपेन्मंत्रं जुहुयात्तद्दशांशतः ॥ २५ ॥
अमृतत्रयसिक्तेन पायसेन विधानवित् ।
अथवार्कसहस्रं तु हुनेत्तावच्च तर्पयेत् ॥ २६ ॥
रक्तपद्मायुतं हुत्वा त्रैलोक्यं वशमानयेत् ।
केवलं घृतहोमेन जीवेद्वर्षशतं सुखी ॥ २७ ॥
पलाशलक्षहोमेन भवेद्वाक्पतिसन्निभः ।
व्रतस्थः कोटिजापेन केवल्यं लभते ध्रुवम् ॥ २८ ॥
दशाष्टादशवर्णोक्तकर्म चानेन साधयेत् ।
अनेन सदृशो मंत्रः कृष्णमंत्रे न विद्यते ॥ २९ ॥
असौ समस्तमंत्राणां जीवनं कथितं मुने ।
निर्जीवा ये च वै मंत्राः शक्तिहीनाश्च कुंठिताः ॥ ३० ॥

परिमक्षे स्थिता ये च केवला वर्णरूपिणः ।
एतदाद्येन जप्येन जीवंति च पुनंति च ॥ ३१ ॥

हृषीकेशपदं ङेऽतं नमोऽस्तः कामपूर्वकः ।
अष्टाक्षरो मनुः प्रोक्तः समस्तपुरुपार्थदः ॥ ३२ ॥

ऋषिश्छन्दो देवता च पूजाप्रयोगकर्म च ।
कृष्णैकाक्षरवत् सर्वं कुर्यात् सर्वार्थसिद्धये ॥ ३३ ॥

त्रैलोक्यमोहनं ङेऽतं विद्महे तदनन्तरम् ।
कामदेवाय धीमहि तन्नो विष्णुः प्रचोदयात् ॥ ३४ ॥

कथिता विष्णुगायत्री समस्तजनरंजिनी ।
कामादिजपमात्रेण त्रैलोक्यवशकारिणी ॥ ३५ ॥

सर्वपापप्रशमनी [सर्वापत्परिमोचिनी ।
मंत्रसिद्धिकरी पुंसां प्रायश्चित्तविशोधिनी ॥ ३६ ॥

इति श्रीगौतमीये महातंत्रे सर्वतंत्रोत्तमे गौतमनारदसंवादे मंत्रोद्धारप्रसंगो नाम सप्तविंशोऽध्यायः ॥ २७ ॥

# अथ अष्टाविंशोऽध्यायः

श्रीनारद उवाच—

अथापरं मंत्रवरं वक्ष्ये सर्वसमृद्धिदम् ।
यमुपास्य सुराणां तु पालकोऽभूच्छतक्रतुः ॥ १ ॥
सत्यशौरी ङांतजातौ क्रमेण शिखिसंयुतौ ।
नादबिन्दुसमारूढं प्रोक्तं बीजचतुष्टयम् ॥ २ ॥
जय कृष्णो द्विधा प्रोक्तो नित्यं क्रीडासु संगतः ।
ततः प्रमुदितचेतसे नित्यप्रियाय प्रोक्ता ॥ ३ ॥
कृष्णं ङंऽतपदं चोक्त्वा कामान्ते दशवर्णकः ।
वाङ्मायाकमलाबीजैः संपुटो मंत्रनायकः ॥ ४ ॥
सर्वेषां कृष्णमंत्राणामयं मंत्रः शिखामणिः ।
धर्मार्थकामपमोक्षाणामनिशं संप्रदायकः ॥ ५ ॥
संप्रदायविहीना ये मंत्रास्ते निष्फला मताः ।
आनन्दनारदऋषिर्विराट् छन्द उदीरितम् ॥ ६ ॥
श्रीकृष्णो देवता चात्र भुक्तिमुक्तिफलप्रदः ।
पदषट्केन मतिमान् बीजाद्येनांगकल्पनम् ॥ ७ ॥
पूर्ववन्न्यासजालं हि कृत्वा करांगशोधनम् ।
ततश्च विधिवन्न्यस्येन्मातृकां मनुसंपुटाम् ॥ ८ ॥
ऋषिच्छन्दोदैवतानि मूर्ध्नि वक्त्रे हृदि न्यसेत् ।
ध्यायेत् स्थिरमना मन्त्री चराचरगुरुं हरिम् ॥ ९ ॥
क्षीराम्भोनिधिमध्यस्थकनकाचलमध्यतः ।
ध्यायेत् स्वर्णमयीं भूमिं मध्ये सद्रत्नमण्डपम् ॥ १० ॥
अनेकयोजनमितं विस्तीर्णं बहुयोजनम् ।
नानारत्नमयस्तम्भमुक्तादामविराजितम् ॥ ११ ॥
लसत्फेनमयैर्वस्त्रैश्चन्द्रातपविभित्रितम् ।
हंसकारंडवाकीर्णं पंकजोत्पलशोभितम् ॥ १२ ॥
मंडितं दीर्घिकाभ्रातैर्महावाटीपरिष्कृतम् ।
स्वर्णप्राकाररचितं रत्नतोमरचित्रितम् ॥ १३ ॥
तत्र रत्नासने रम्ये संस्थितं पुरुषोत्तमम् ।
रुक्मिणीसत्यभामे च पार्श्वयोर्धृतचामरे ॥ १४ ॥

नानालंकारसुभगे वीजितं परया मुदा ।
कालिन्दीश्लक्ष्णतनये पृष्ठतो धृतबर्हके ॥ १५ ॥
महामेघप्रभाश्यामं पद्मपत्रारुणेक्षणम् ।
पीताम्बरलसच्छ्रीमच्छ्रीवत्सकौस्तुभान्वितम् ॥ १६ ॥
नानालंकारसुभगं तारहारविराजितम् ।
दीप्तरत्नकिरीटं च स्फुरन्मकरकुंडलम् ॥ १७ ॥
गोरोचनाभालतिलकं नीलकुन्तलशोभितम् ।
नारदाद्यैर्मुनिगणैरावृतं स्निग्धलोचनैः ॥ १८ ॥
हृष्टपुष्टजनाकीर्णं नागरैर्बहुविस्तरैः ।
सौधैर्गृहैः समुत्कीर्णपताकैः परिमंडितैः ॥ १९ ॥
ब्रह्मक्षत्रियविट्शूद्रैश्चाकीर्णैरथ पत्तिभिः ।
रथवाजिद्विपचरैः सर्वतः परिमंडितम् ॥ २० ॥
ब्रह्मक्षत्रियविट्शूद्रभवनैस्सुरतोमरैः ।
कामिनीभिः सुभव्याभिः सर्वतः परिमंडितम् ॥ २१ ॥
नानाविचित्ररत्नैश्च मंडिताभिः समंततः ।
एवं ध्यात्वा मुनिश्रेष्ठ लक्षमेकं जपेन्मनुम् ॥ २२ ॥
विल्वैः फलैस्त्रिमध्वाक्तैर्जुहुयात्तद्दशांशतः ।
तर्प्पयेत्तद्दशांशेन तद्दशांशेन मार्जनम् ॥ २३ ॥
तद्दशांशेन मंत्रज्ञो विप्रमुख्यांश्च भोजयेत् ।
रत्नाभिषेकगोपालपीठे देवं प्रपूजयेत् ॥ २४ ॥
षडंगावृत्तिवाह्ये तु महिषीर्यंत्रगा यजेत् ।
रुक्मिण्याद्या महारत्नभूषिताः प्रकृतयः शुभाः ॥ २५ ॥
तद्वहिरिन्द्रवज्राद्या जात्यधिपयाऽस्त्रवाहनम् ।
एवमभ्यर्चनं कृत्वा सिद्धमंत्रो द्विजोत्तमः ॥ २६ ॥
प्रयोगात् साधयेद्यस्तु कर्त्ता हर्त्ता च सर्वतः ।
श्रीपुष्पैर्लक्षमात्रेण होमाद् भूमिपुरन्दरः ॥ २७ ॥
पलाशैर्लक्षमात्रेण होमाद्वागीश्वतां व्रजेत् ।
हयारिकुसुमैर्हुत्वा जगद्रंजनकारकः ॥ २८ ॥
केवलं घृतहोमेन जीवेद्वर्षशतं सुखी ।
अन्नहोमेन धनवान् पशुमान् दुग्धहोमतः ॥ २९ ॥
कारस्करफलैर्होमाच्छत्रुमुच्चाटयेत् क्षणात् ।
मरीचहोमान्मतिमान् मारयेद्रिपुमात्मनः ॥ ३० ॥

पुंडरीकायुतं हुत्वा मुच्यते सर्वपातकैः।
तल्लक्षमात्रहोमेन राज्यैश्वर्य्यमवाप्नुयात् ॥ ३१ ॥
आत्मानं कंसमथनं रिपुं कंसात्मकं तथा।
दक्षिणाभिमुखो भूत्वा दशसहस्रजापतः ॥ ३२ ॥
क्रुद्धाशयस्तथा मंत्री बलिनो मारयेद् रिपून्।
अथ मृतासनो नित्यं शत्रुवैरश्वतातिथिः ॥ ३३ ॥
तस्य संत्राणकृत् कश्चिन्नास्त्येव भुवनत्रये।
न शस्तं मारणं कर्म यदि स्याद्वैष्णवे मनौ ॥ ३४ ॥
ब्रह्मन् ब्रह्मास्त्रमादाय शशकादौ न मोचयेत्।
यदि कुर्य्यात् प्रमादेन एषु स्थानेषु सम्भवेत् ॥ ३५ ॥
पापिने हैतुकायापि शठाय जनतापिने।
आत्मवित्तगृहक्षेत्रकलत्राद्यपहारिणे ॥ ३६ ॥
अभिचारेणाभिचरेत्तदा दोषैर्न लिप्यते।
दुष्टानां दमनं शस्तं कथितं तव गौतम ॥ ३७ ॥
अतः स्वयं प्रयतेदुत्पथानां विनिग्रहे।
लक्षमेकं जपेन्मंत्रं प्रायश्चित्ताय दैशिकः ॥ ३८ ॥
येन पापैर्विमुक्तोऽसौ भवेत् कल्याणसंयुतः।
साध्यं संहृत्य कृत्याऽनु साधकं भोक्तुमिच्छति ॥ ३९ ॥
तेनात्मानं सदा रक्षेत् कृत्येनानेन दैशिकः।
मृत्युंजयं वा प्रजपेन्मंत्रादौ गुरुसत्तमः ॥ ४० ॥
सर्वत्र कर्मणि पुनर्गुरुरेव हि कारणम्।
गुरोरनुज्ञामादाय सर्वकर्माणि साधयेत् ॥ ४१ ॥

इति श्रीगौतमीये महातंत्रे सर्वतंत्रोत्तमे गौतमनारदसंवादे मंत्रोद्धारप्रसंगो नामाष्टाविंशोऽध्यायः ॥ २८ ॥

---

*. चिन्तयेत् इति शेषः।

# अथ एकोनत्रिंशोऽध्यायः

श्रीनारद उवाच—

अथ शृणु प्रवक्ष्यामि मंत्रं श्रीपुरुषोत्तमम्।
यज्ज्ञानात् साधकवरो भुक्तिमुक्त्येकभाजनम् ॥ १ ॥
समस्तसिद्धिसंयुक्तो जीवन्मुक्तो महीं चरेत्।
देहान्ते केवलं धाम याति तत्परमं पदम् ॥ २ ॥
सर्वेषु कृष्णमंत्रेषु श्रेष्ठः श्रीपुरुषोत्तमः।
भुक्तिमुक्तिकरः साक्षात् स्मरणादेव वै नृणाम् ॥ ३ ॥
प्रणवं मारबीज च रमांतेन इत्यपि।
पुरुषोत्तमपदं चोक्त्वा तथाऽप्रतिहरूपतः ॥ ४ ॥
ततो लक्ष्मीनिवासेति सकलांते जगत्तथा।
क्षोभनेतिपदं चोक्त्वा समाहितमना भवेत् ॥ ५ ॥
सर्वस्त्रीहृदयोपेतविदारणपदं तथा।
उक्त्वा ततस्त्रिभुवनमनोन्मादकरं पुनः ॥ ६ ॥
सुरासुरांते मनुजः सुन्दरीजनवल्लभः।
मनांसि तापयद्वन्द्वं दीपयद्वितयं पुनः ॥ ७ ॥
शोषयद्वितयं भूयस्स्रावयद्वितयं परम्।
स्तनयद्वितयं पश्चान्मोदयद्वितयं पुनः ॥ ८ ॥
द्रावयद्वितयं पश्चादाकर्षययुगं तथा।
समस्तपरमोपेतसुभगेन च संयुतम् ॥ ९ ॥
सर्वसौभाग्यशब्दान्ते करेतिपदसंयुतम्।
सर्वकामप्रदपदमनुकंपय ततः परम् ॥ १० ॥
चक्रेण गदया पश्चात् खड्गेन तदनन्तरम्।
सर्वबाणैर्भिधियुगं पाशेनेतिपदं ततः ॥ ११ ॥
बंधयान्ते चांकुशेन ताडयद्वितयं पुनः।
कुरुशब्दद्वयमथो किं तिष्ठसि पदं पुनः ॥ १२ ॥
तावद्यावत्पदस्यांते समीहितमनन्तरम्।
ततो मे सिद्धमाभाष्य भवत्यंते च वर्मफट् ॥ १३ ॥
जैमिनिर्मुनिराख्यातो विराट् छन्दः समीरितः।
[illegible] पुरुषोत्तमः ॥ १४ ॥

पुरुषोत्तमशब्दान्ते वन्दे त्रिभुवनं पुनः ।
मदोन्मादकशब्दान्ते हुं हृदयं सकलां ततः ॥ १५ ॥
जगत्क्षोभणशब्दान्ते लक्ष्मीदयित हुँ शिरः ।
पुरुषोत्तमसंयुक्तमंगजे कामदायिनी ॥ १६ ॥
हुँ शिखा परमोत्तमसुभगायाक्षरसंयुतम् ।
सर्वतोभाग्यकरं हुँ कवचं परिकीर्तितम् । १७ ॥
उक्त्वा सुरासुरोपेतः मनुजान्वितसुन्दरी ।
ततः पश्चाद्धरपदं विदारणपदं वदेत् ॥ १८ ॥
सर्वप्रहरणधर सर्वकामीति तत्परम् ।
हनद्वयं च हृदयबन्धनानि ततः परम् ॥ १९ ॥
आकर्षयपदद्वन्द्वं महाबलहुमस्त्रकम् ।
त्रिभुवनेश्वरपदं चोक्त्वा तत. सर्वजनान्तकः ॥ २० ॥
मनांसि हरयुग्मान्ते दारयद्वितयं ततः ।
वशमानय हुँ नेत्रमस्त्राय फट् नमोंऽतिकः ॥ २१ ॥
षडंगमंत्राः संदिष्टा नेत्रान्ता मंत्रवेदिभिः ।
त्रैलोक्यमोहनान्ते तु हृषीकेशपदं ततः ॥ २२ ॥
पश्चादप्रतिहतरूपादिमन्मथानन्तरं पुनः ।
सर्वान्स्त्रीपदं चोक्त्वा हृदयाकर्षण ततः ॥ २३ ॥
आगच्छागच्छमंत्रोयं . ताराद्यो नमसान्वितः ।
अनेन मनुना हुत्वा व्यापकं न्यस्य बाहुषु ॥ २४ ॥
अष्टायुधानि मुद्राभिर्मंत्रैः सार्द्धं विचिन्तयेत् ।
क्षीराम्भोनिधिमध्यस्थानिरंतरसुरद्रुमम् ॥ २५ ॥
उद्यदर्केन्दुकिरणदूरीकृततमोभरम् ।
कालमेघोपमालोकनृत्यद्बर्हिकदम्बकम् ॥ २६ ॥
उत्फुल्लकुमुदामोदप्रहृष्यद्भृंगसंकुलम् ।
कूजत्कोकिलसंघेन वाचालितदिगन्तरम् ॥ २७ ॥
नानाकुसुमसौरभ्यवाहिगंधवहान्वितम् ।
कल्पवल्लीनिकुंजेषु क्रीडन्सिद्धकदम्बकम् ॥ २८ ॥
देवगंधर्वनारीभिरलङ्कृतनिरन्तरम् ।
अनेकदीर्घिकायुक्तमुद्यानं महदद्भुतम् ॥ २९ ॥
तस्य मध्ये मणिमये मण्डपे तोरणान्विते ।
ऋतुभिः षड्भिरनिशं सेवितस्य महीयसः ॥ ३० ॥

सुरद्रुमस्य मूलस्थे महासिंहासने शुभे।
रक्तारविन्दमध्यस्थं गरुडोपरि संस्थितम्॥ ३१॥
ध्यायेद्वल्लभया सार्द्धं जगन्नाथं जगन्मयम्।
देवं श्रीपुरुषोत्तमं कमलया स्वांकस्थया पंकजं
बिभ्रत्या परिवद्धमम्बुजरुचा तस्यां निवद्धेक्षणम्।
ध्यायेच्चेतसि शंखचक्रमुशलं चापासिखड्गं गदां
हस्तैरंकुशमुद्वहन्तमरुणं स्मेरारविन्दाननम्॥ ३२॥
एवं ध्यात्वा श्रियः कान्त मंत्रं लक्षचतुष्टयम्।
जपेद्वशी विधायाथ कुण्डमर्द्धेन्दुसन्निभम्॥ ३३॥
जुहुयाद्वैष्णवे वह्नौ पुष्पैर्जातीसमुद्भवैः।
पुष्पैः सर्वैः क्रमात् पश्चाद् ब्राह्मणानपि भोजयेत्॥ ३४॥
अर्चयिष्यन् जगन्नाथं गायत्र्या परिशोधयेत्।
आनयेद्यागवस्तूनि यागभूमिं च देशिकः॥ ३५॥
त्रैलोक्यमोहनायेति विद्महे पदमीरयेत्।
स्मराय धीमहि पश्चात्तन्नो विष्णुः प्रचोदयात्॥ ३६॥
गायत्र्येषा समाख्याता वैष्णवो सर्वसिद्धिदा।
प्राक् प्रोक्ते वैष्णवे पीठे कल्पयेदासनं ततः॥ ३७॥
पक्षिराजपदद्वन्द्वमस्य मंत्रः प्रकीर्तितः।
कल्पितायां तु मूलेन मूर्त्तौ देवमनन्यधीः॥ ३८।
आवाह्य मनुना विद्वान् व्यापकेन समर्चयेत्।
अंगुलीतपुनर्सेन्दुर्बीजं देव्याः प्रकीर्तितम्॥ ३९॥
कर्णिकायां यजेदादौ विधानेनांगदेवताः।
दलमूलेषु ताः पूज्या लक्ष्म्याद्या धृतचामराः॥ ४०॥
मुक्ताहारलसत्कांतपयोधरभरालसाः।
जपाकुसुमसंकाशा मदविभ्रममंथराः॥ ४१॥
ह्रस्वत्रयक्लीबसर्गारहिताः स्वरशोभिताः।
देवीर्बीजं क्रमादासां मंत्रमाहुर्मनीषिणः॥ ४२॥
दलाग्रेषु यजेत् पद्मं शंखं चापं गदां तथा।
अंकुशं मुशलं पाशं चक्रमस्त्राणि शार्ङ्गिणः॥ ४३॥
स्वमुद्राभिः स्वमनुभिः कथ्यन्ते मनवः क्रमात्।
आद्यो तलचरापांते द्वयं मनुरीरितः॥ ४४॥
शार्ङ्गाय सशरासनायांते स्वाहांतः परमो मनुः।
सुदर्शनमहाचक्र राजांते स्याद्दहद्वयम्॥ ४५॥

सर्वदुष्टजयं पश्चात् कुरुछिंधियुगं पृथक् ।
विदारयपदद्वन्द्वं परमंत्रान् प्रस प्रस ॥ ४६ ॥
भक्षभक्ष्यावयद्वन्द्वं प्रत्येकं वर्मफट्द्वयम् ।
चक्राय नम इत्येवं तृतीयमनुरीरितः ॥ ४७ ॥
खड्गतीक्ष्णपदस्यान्ते छिंधि खड्गयुगं पृथक् ।
चतुर्थोऽयं मनुः प्रोक्तः कौमोदकि महाबले ॥ ४८ ॥
सर्वासुरांतिकपदं प्रसीद्युगवर्मफट् ।
स्वाहान्तोऽयं मनुः प्रोक्तः शार्ङ्गखड्गकौमोदकीपरः ॥ ४९ ॥
अंकुशान्तैकहृयुग्मं षष्ठोऽयं मनुरीरितः ।
संवर्तकांतमुसल पोथयद्वितयं पुनः ॥ ५० ॥
हुं फट् द्विपाटान्तो मंत्रोऽयं सप्तमः स्मृतः ।
पाशबन्धद्वयं पश्चाद्भ्रात्यैरायुधैः सह ॥ ५१ ॥
इत्थमभ्यर्चयेन्नित्यं यथावत् पुरुषोत्तमम् ।
प्राप्नोति महतीं लक्ष्मीं सौभाग्यमतुलं यशः ॥ ५२ ॥
आयुरारोग्यमन्यानि मनोभीष्टानि विन्दति ।
ह्यारिकुसुमैर्देवमर्चयित्वा यथाविधि ॥ ५३ ॥
शशिप्रसूनैर्जुहुयादष्टोत्तरसहस्रकम् ।
मंत्रमात्रेण वशिनस्तस्य स्युः सकला नृपाः ॥ ५४ ॥
हुत्वा बिल्वफलोपेतैः श्रियं विन्देदनिन्दिताम् ।
प्रफुल्लैररुणाम्भोजैस्तामेव लभतां नरः ॥ ५५ ॥
हुत्वा ज्योतिपमर्त तैलं सहस्रं वसुसंख्यकम् ।
सुभगो जायते सम्यक् सर्वेषां नात्र संशयः ॥ ५६ ॥
विधानेनामुना मंत्री महारोगान् प्रमुच्यते ।
अश्वत्थसमिधा होमः पराहृतधनागमः ॥ ५७ ॥
आज्याक्तदूर्वाहोमेन मुच्यते मृत्युतो भयात् ।
यस्य नामयुतं मंत्रं जपेदयुतसंख्यया । ५८ ॥
स भवेद्दासवत्तस्य नात्र कार्या विचारणा ।
बहुना किमिहोक्तेन मनुना साधकोत्तमः ॥ ५९ ॥
साधयेत सकलान् कामान् साक्षाद्विष्णुरिवापरः ।
अथ यंत्रं प्रवक्ष्यामि स्पष्टदृष्टफलप्रदम् ॥ ६० ॥
पूर्वोत्तरभुजं हित्वा सूत्र नवनवं न्यसेत् ।
जायन्ते तत्र कोष्ठानि चतुःषष्टिप्रभेदतः ॥ ६१ ॥

ईशानाद्राक्षसं यावद्राक्षसाद्वायुकोणकम् ।
विलिखेन्मंत्रवर्णान्यनुष्टुबुत्तराणि च ॥ ६२ ॥
यंत्रमेतत् समाख्यातं सर्वतोभद्रसंज्ञकम् ।
सर्वरोगप्रशमनं समस्तपुरुषार्थदम् ॥ ६३ ॥
लिखितं भूर्जपत्रादौ यंत्रमेतद्यथाविधि ।
विधृतं बाहुना नित्यं सर्वकामफलप्रदम् ॥ ६४ ॥
फलके खादिरे कृत्वा गवां गोष्ठे निवेशितम् ।
रक्षाकृच्चोरमारिघ्नं सवत्सानां गवां हितम् ॥ ६५ ॥
क्षीरगोपयगोरक्षारक्षमाक्षक्षमांचर ।
गोमानोगगनोमार्गो विपक्षगमपक्षय ॥ ६६ ॥
इत्येवं मंत्रतत्त्वं च कथितं तव सुव्रत ।
केवलं त्वत्प्रयत्नेन किमन्यच्छ्रोतुमिच्छसि ॥ ६७ ॥

इति श्रीगौतमीये महातंत्रे सर्वतंत्रोत्तमे गौतमनारदसंवादे मंत्रोद्धार-
प्रसंगो नाम एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

# अथ त्रिंशत्तमोऽध्यायः

गौतम उवाच—

सर्वज्ञ सर्वशास्त्रज्ञ सर्वतत्त्वार्थपारग।
स्वायम्भुव नमस्तुभ्यं कृपां कुरु कृपाकर ॥ १ ॥
तव नाविदितं किंचित् त्रैलोक्ये सचराचरे।
ऋषिदेवमुनीनां च प्रधान त्वं पुरातन ॥ २ ॥
कृपां कुरु महाभाग जेयया मयि सुव्रत।
संसारे दुःखभूयिष्ठे रोगशोकभयाकुले ॥ ३ ॥
भवार्णवेऽभिमग्नं मां त्वमुद्धर्तुमिहार्हसि।
तवावतारो लोकानां क्षेमाय विजयाय च ॥ ४ ॥
इदानीं कथय ब्रह्मन् मंत्रसिद्धेस्तु लक्षणम्।

श्रीनारद उवाच—

मृत्यूनां हरणं तावद्देवतादर्शनं तथा ॥ ५ ॥
प्रयोगाणामतः सिद्धिः सिद्धेस्तु लक्षणं परम्।
परकायप्रवेशश्च परवेश्मप्रवेशनम् ॥ ६ ॥
ऊर्ध्वोत्क्रगममेवं हि चराचरपुरे गतिः।
खेचरीमेलनं चैव तत्कथाश्रवणं तथा ॥ ७ ॥
भूछिद्राणि च पश्येत् पातालादिषु संगमः।
आकर्षणं सुरस्त्रीणां वरांगना वशमानयेत् ॥ ८ ॥
पादुका गुटिका तद्वदन्तर विवरं तथा।
अणिमादींश्च संप्राप्य केवलं मोक्षमाप्नुयात् ॥ ९ ॥
इत्येवं कथितं ब्रह्मन् प्रधानं सिद्धिलक्षणम्।
इदानीं ते प्रवक्ष्यामि मध्यमस्य तु लक्षणम् ॥ १० ॥
ख्यातिवाहनभूपादिलाभः सुचिरजीवनम्।
नृपाणामबलानां च वशीकरणमुत्तमम् ॥ ११ ॥
सर्वत्र सर्वलोकेषु चमत्कारकरं महत्।
रोगापहरणं दृष्ट्वा विषापहरणं तथा ॥ १२ ॥
पांडित्यं लभते मंत्री चतुर्विधमयत्नतः।
वैराग्यं च मुमुक्षुत्वं त्यागिता सर्ववश्यता ॥ १३ ॥

अष्टाङ्गयोगाभ्यसनं भोगेच्छापरिवर्जनम् ।
सर्वभूतानुकंपा च सर्वज्ञादिगुणोदयः ॥ १४ ॥
इत्यादिगुणसंपत्तिर्मध्यसिद्धेस्तु लक्षणम् ।
ख्यातिवाहनभूपादिलाभः सुचिरजीवनम् ॥ १५ ॥
नृपाणामंगनानां च वात्सल्यं लोकवश्यता ।
महैश्वर्य्यधनित्वं च पुत्रदारादिसंपदा ॥ १६ ॥
अधमाः सिद्धयः प्रोक्ता मंत्रिप्रथमभूमिकाः ।
सिद्धमंत्रस्तु यः साक्षात् स शिवो नात्र संशयः ॥ १७ ॥
सिद्धिलक्षणमित्युक्तं तदुपायमथो शृणु ।
पितृमातृविशुद्धा ये शुद्धाचारा जितेन्द्रियाः ॥ १८ ॥
संप्रदायेनोपदिष्टास्तेषां सिद्धिर्द्रुतं भवेत् ।
मलिना मलसंछन्नाः पापिनस्तरलाश्च याः ॥ १९ ॥
देवार्चनादिविमुखा गुरवे शठवृत्तयः ।
तेषां कृच्छ्रेण सिद्ध्यंति मंत्रजापहुतादिभिः ॥ २० ॥
मंत्रा ये मलसंछन्नाः केवला वर्णरूपिणः ।
निर्जीवाः सत्त्वहीना ये कुंठिताश्च तिरस्कृताः ॥ २१ ॥
अरिपक्षे स्थिता ये च शापादिसंयुतास्तथा ।
ये मंत्रा अविधिप्राया ये च सिद्धांतवर्जिताः ॥ २२ ॥
इत्यादिदोषदुष्टाश्च सिद्धिदा नाल्पयोगतः ।
पशुभावे स्थिता मंत्राः केवला वर्णरूपिणः ॥ २३ ॥
सौषुम्नध्वन्युच्चरिताः प्रभु प्राप्नुवन्ति ते ।
वक्ष्यामि चरमेऽध्याये तदुपायं तवानघ ॥ २४ ॥
संस्कारा दश कथ्यन्ते येन मंत्रस्य सिद्धयः ।
स्वल्पयोगेन विधिवत्ताश्च वक्ष्यामि तत्त्वतः ॥ २५ ॥
जननं जीवनं पश्चात्ताडनं बोधनं तथा ।
अथाभिषेको विमलीकरणाप्यायने तथा ॥ २६ ॥
तर्पणं दीपनं गुप्तिर्दशैताः मंत्रसंस्क्रियाः ।
स्वर्णादिपात्रे संलिख्य मातृकामंत्रमुत्तमम् ॥ २७ ॥
काश्मीरचन्दनेनाथ भस्मना वाथ सुव्रत ।
काश्मीरं शाक्तसंस्कारे चन्दनं वैष्णवे मतौ ॥ २८ ॥
शैवे भस्म समाख्यातं मातृकामंत्रलेखने ।
वर्णानां मातृकामध्यादुद्धारो जननं स्मृतम् ॥ २९ ॥

षड्भिः क्रमेण विधिना मुनिभिर्मंत्रनिश्चयैः ।
प्रणवांतरितान् कृत्वा मंत्रवर्णान् जपेत् सुधीः ॥ ३० ॥
प्रत्येकं शतवारं तु जीवनं तदुदाहृतम् ।
मंत्रवर्णान् समालिख्य ताडयेच्चंदनाम्भसा ॥ ३१ ॥
प्रत्येकं वायुबीजेन पूर्ववत्ताडनं मतम् ।
भस्मना कुंकुमेनाथ पुनः शीतलवारिणा ॥ ३२ ॥
शैवादिमंत्रभेदेन प्रोक्तं द्रव्यत्रयं शुभम् ।
विलिख्य मंत्रपिंडन्तु प्रसूनैः करवीरजैः ॥ ३३ ॥
तन्मंत्राक्षरसंख्यातैर्हन्याद्यातेन बोधनम् ।
ततस्तंत्रोक्तविधिना तर्पणं तर्पणं मतम् ॥ ३४ ॥
मधुना शक्तिमंत्रेण वैष्णवे चेत्तु सज्जनैः ।
शैवे घृतेन दुग्धेन एतैश्च तर्प्पणं मतम् ॥ ३५ ॥
अन्यत्र मंत्रेण तर्पणं सम्यगीरितम् ।
जलेन सर्वतंत्रे च अभिषकः प्रकीर्तितः ॥ ३६ ॥
अश्वत्थपल्लवैः सिंचेन्मंत्री मंत्रार्णशिक्षया ।
संचिन्त्य मनसा मंत्रं सुषुम्नामूलमध्यतः ॥ ३७ ॥
दीप्यमानं च मंत्रं च गोपयेत् सर्वसिद्धये ।
दीप्यमानस्य मंत्रस्य शीदता मंत्रसंस्क्रिया ॥ ३८ ॥
यान् कृत्वा संप्रदायेन मंत्री वांछितमश्नुते ।
अथवान्यत् प्रवक्ष्यामि मंत्राणां सिद्धिलक्षणम् ॥ ३९ ॥
ज्योतिर्मंत्रेण विधिवदाप्यायनविधिः स्मृतः ।
दीपयेत् सर्वमंत्राणि योगतस्तारकामतः ॥ ४० ॥
यत्कृत्वा मनुवित् सम्यक् सिद्धिमाप्नोत्ययत्नतः ।
कामश्रीशक्तिबीजानां योजनात् सिद्धिदो मनुः ॥ ४१ ॥
अथवान्यत् प्रवक्ष्यामि सिद्ध्युपायं मुने शृणु ।
स्थानस्थवरदा मंत्रा ध्यानस्थांश्च वरप्रदाः ॥ ४२ ॥
स्थानस्थध्यानहीनो ये कोटिजायात् फलं नहि ।
अपि तेऽन्यत् प्रवक्ष्यामि मंत्रसिद्धेस्तु लक्षणम् ॥ ४३ ॥
मातृकापुटितं कृत्वा स्वतंत्रं प्रजयेत् सुधीः ।
क्रमात् क्रमाच्छतावृत्या तदंते केवलं मनुम् ॥ ४४ ॥
एवं तु प्रत्यहं जप्याद् यावल्लक्षं समाप्यते ।
निश्चितं मंत्रसिद्धिः स्यादित्युक्तं तंत्रवेदिभिः ॥ ४५ ॥

अपि संक्षेपतो वक्ष्ये पुरश्चरणमुत्तमम् ।
चन्द्रसूर्य्यग्रहे चैव शुचिः पूर्वमुपोषितः ॥ ४६ ॥
नद्यां समुद्रगामिन्यां नाभिमात्रोदके स्थितः ।
ग्रहणादिविमोक्षान्तं जपेन्मंत्रं समाहितः ॥ ४७ ॥
होमयेत्तद्दशांशेन तद्दशांशेन तर्प्पयेत् ।
अभिषिंचेद्दशांशेन तद्दशांशे द्विजभोजनम् ॥ ४८ ॥
इत्येवं पंचकल्पेन सिद्धमंत्रो भवेन्नरः ।
अथवा मूर्ध्निदेशे च गुरुं संचिंत्य वाग्यतः ॥ ४९ ॥
गुर्वग्रे निवसेन्मंत्री मंत्रोक्तं जपमाचरेत् ।
अनन्तरं दशांशेन क्रमाद्धोमादिकं चरेत् ॥ ५० ॥
एवं कृत्वा सिद्धमंत्रो भवेन्मत्री न चान्यथा ।
गुरवे दक्षिणां दद्याद् भूषणाच्छादनादिभिः ॥ ५१ ॥
गुरोः सन्तोषमात्रेण सिद्धिः स्यादपवर्गदा ।
नाजप्तः सिद्धयंते मंत्रो नाहुतश्च कदाचन ॥ ५२ ॥
नापूजितश्च विधिवन्नातर्पितो न भोजितः ।
पंचकृत्येषु ते मंत्राः कालसंख्या न विद्यते ॥ ५३ ॥
कृते चोक्तजपात् सिद्धिस्त्रेतायां द्विगुणो जपः ।
द्वापरे त्रिगुणा चैव कलौ संख्या चतुर्गुणा ॥ ५४ ॥
कृष्णमंत्रेषु विप्रर्षे युगसंख्या न विद्यते ।
जपतर्पणसिद्धाद्यैर्नात्र सेवापरिश्रमः ॥ ५५ ॥
अथापरं प्रवक्ष्यामि सिद्ध्युपायं महाद्भुतम् ।
येन सिद्धेन मनुवित् सृष्टिस्थित्यन्तकारकः । ५६ ॥
तत्तत्क्रमानुरूपेण तत्तद्योगं प्रयोजयेत् ।
ग्रथनादिप्रदेशश्च मंत्राणां वक्ष्यतेऽधुना । ५७ ॥
ग्रथितं सुपुटं ग्रस्त समस्तं च विदर्भितम् ।
तथा चाक्रान्तमाद्यन्तगर्भस्थं सर्वतो वृतम् ॥ ५८ ॥
तथा मुक्तिविदर्भं च विदर्भं ग्रथितं तथा ।
इत्येकादशधा मंत्राः प्रयुक्ताः कार्यसिद्धिदाः ॥ ५९ ॥
साध्यनामा .. रकं मंत्रान्ते सयोजितम् ।
ग्रथितं तत्समाख्यातं वश्याकृष्टिकरं परम् ॥ ६० ॥
मंत्रमादौ वदेत् सर्वं मध्ये संज्ञामनन्तरम् ।
विपरीतं पुनश्चांते मंत्रं तत्संपुटं स्मृतम् ॥ ६१ ॥

शान्तिपुष्टिकरं ज्ञेयं त्रैलोक्यैश्वर्य्यदायकम् ।
अर्द्धमर्द्धं तथाद्यंते मंत्रं कुर्य्याद् विचक्षणः ॥ ६२ ॥
मध्ये चास्य भवेत् साध्यं ग्रस्तमित्यभिधीयते ।
अभिचारेषु सर्वेषु योजयेन्मारणेषु च ॥ ६३ ॥
अभिधानं वदेत् पूर्वं पश्चान्मंत्रं तथा वदेत् ।
एतत् समस्तमित्युक्तं शत्रूच्चाटनकारकम् ॥ ६४ ॥
द्वौ द्वौ मंत्राक्षरौ यत्र एकैकं साध्यमात्रकम् ।
विदर्भितं तु तत्प्रोक्तं दुष्टघ्नं वश्यलक्षणम् ॥ ६५ ॥
मंत्राणां तरित जाप्यं समं तत्तिष्ठते यदि ।
आक्रान्तं तद्विजानीयात् सद्यः सर्वार्थदायकम् ॥ ६६ ॥
रतो भस्तं भसमावेशवश्योच्चारनकर्मसु ।
सकृत्पूर्वं वेदन्मंत्रमन्ते चैव तथा पुनः ॥ ६७ ॥
मध्ये चास्य भवेत् साध्यमाद्यंताविति तद्विदुः ।
अन्योन्यप्रीतियुक्तानां विद्वेषणकरं परम् ॥ ६८ ॥
आदौ चान्ते तथा मंत्रं द्विवारं संप्रयोजयेत् ।
साध्यनाम सकृन्मध्ये गर्भस्थं तु तदुच्यते ॥ ६९ ॥
मारणोच्चाटनं वश्यं प्रयुक्तं कारयेन्नृणाम् ।
हेतिनौ सन्निधौगर्भस्तम्भनं च गतेस्तथा ॥ ७० ॥
त्रिधा मंत्रं वदेत् पूर्वं तथैवान्ते पुनस्त्रिधा ।
सकृत् साध्यं भवेन्मध्ये तद्विद्यात् सर्वतो वृतम् ॥ ७१ ॥
सर्वोपसर्गशमनं सदा मृत्युनिवारणम् ।
सर्वसौभाग्यभजनं भूतानाममृतप्रदम् ॥ ७२ ॥
आदौ मंत्रस्ततो नाम पुनर्मंत्रं समालिखेत् ।
एवमेव त्रिधा कृत्वा भवेन्मुक्तिविदर्भितम् ॥ ७३ ॥
सर्वव्याधिहरं प्रोक्तं भूतापस्मारमर्दनम् ।
एकैकं साध्यवर्णन्तु कृत्वा मंत्रविदर्भितम् ॥ ७४ ॥
पूर्ववत् कथित चान्यत्तस्याद्यन्ते प्रकल्पयेत् ।
विदर्भग्रथितं नाम मंत्रलक्षणमुत्तमम् ॥ ७५ ॥
सर्वकर्मकरं प्रोक्तं सर्वैश्वर्य्यफलप्रदम् ।
एवमेते प्रयोगाः स्युः सिद्धमंत्रस्य सिद्धिदाः ॥ ७६ ॥
अथापरं प्रवक्ष्यामि मंत्रसिद्धेस्तु लक्षणम् ।
यज्ज्ञात्वा साधकश्रेष्ठो यदि सिद्धो न जायते ॥ ७७ ॥

उपायास्तत्र कर्त्तव्या मंत्रसिद्धिं लभेद् ध्रुवम् ।
सम्यक् संतुष्टितो मंत्रो यदि सिद्धो न जायते ॥ ७८ ॥
पुनस्तथैव कर्त्तव्यं ततः सिद्धो भवेन्मनुः ।
पुनरनुष्ठितो मंत्रो यदि सिद्धो न जायते ॥ ७९ ॥
पुनस्तथैव कर्त्तव्यं ततः सिद्धो न संशयः ।
पुरुषोऽनुष्ठितो मंत्रो यदि सिद्धो न जायते ॥ ८० ॥
उपायास्तत्र कर्त्तव्याः सप्त शंकरभाषिताः ।
भ्रामणं रोधनं वश्यं पठितं पोपपोपणे ॥ ८१ ॥
दहनांतं क्रमात् कुर्य्यात्ततः सिद्धो भवेद् ध्रुवम् ।
भ्रामणं कारुणे बीजे ग्रथतं क्रमयोगतः ॥ ८२ ॥
तन्मंत्रं यंत्रमालिख्य शिलाकर्पूरकुंकुमैः ।
उशीरचन्दनाभ्यां च मंत्रं संग्रथितं लिखेत् ॥ ८३ ॥
क्षीराज्यमधुतोयानां मध्ये तं लिखितं क्षिपेत् ।
पूजनाज्जापनाद्धोमात् सिद्धिदो भ्रामणं भवेत् ॥ ८४ ॥
भ्रामितो यदि नो सिद्धो रोधनं तस्य कारयेत् ।
सारस्वतेन बीजेन संपुटीकृत्य तं जपेत् ॥ ८५ ॥
धार्य्यः कंठे भवेत्सिद्धः पीडनं वास्य कारयेत् ।
अधरोत्तरयोगेन पदानि परिजप्य वै ॥ ८६ ॥
ध्यायेत् देवतां तद्वदधरोत्तररूपिणीम् ।
विद्यामादित्य दुग्धेन लिखित्वा क्रमचांघ्रिणा ॥ ८७ ॥
तथाभूतेन मंत्रेण मोहः कार्यो दिने दिने ।
पीडितो लज्जयाविष्टः सिद्धः स्यादथ शोषयेत् ॥ ८८ ॥
बालायाः त्रितयं बीजमाद्यंते तस्य योजयेत् ।
गोक्षीरमधुना लिख्य विद्यापारां विधारयेत् ॥ ८९ ॥
पोषितोयं भवेत्सिद्धो न चेत्कुर्वीत शोषणम् ।
द्वाभ्यां च वायुबीजाभ्यां मंत्रं कुर्याद्विदर्भितम् ॥ ९० ॥
एषा गले च संधार्य्या लिखित्वा चैव भस्मना ।
शोषितोऽपि न सिद्धश्चेद्दहनीयोग्निबीजतः । ९१ ॥
आग्नेयेन तु बीजेन मंत्रस्यैकैकमक्षरम् ।
आद्यंत अत ऊर्ध्वं च योजयेद् दाहकर्मणि ॥ ९२ ॥
ब्रह्मवृक्षस्य तैलेन मंत्रमालिख्य धारयेत् ।
कंठदेशे ततो मंत्रः सिद्धः स्याच्छंकरोदितः ॥ ९३ ॥

इत्येतत्कथितं सम्यक्केवलं तव भक्तितः ।
एकेन तु कृतार्थः स्याद्बहुभिः किमु सुव्रत ॥ ९४ ॥
अथापरं प्रवक्ष्यामि मंत्रौषधि महाद्भुतम् ।
यत्प्रयोगविधानेन सद्यः सिद्धो भवेन्मनुः ॥ ९५ ॥
सुवर्णपुष्पीमूलेन पिष्टेन निजवारिणा ।
तल्लिप्तांगस्य कंठस्थो मनुः सद्यः प्रसीदति ॥ ९६ ॥
विमुक्तः सर्वपापौघैः कृष्णं पश्यति चक्षुषा ।
जीवन्मुक्तो भवेन्मंत्री सत्यं सत्यं मयोदितम् ॥ ९७ ॥
यत्र वा कुत्रचिद्देशे गंतुं कामयते नरः ।
स्वर्गे वा भूतले मंत्री पाताले वाथ कौतुकात् । ९८ ॥
तत्क्षणात्तत्प्रयात्येव सर्वसिद्धीश्वरो भवेत् ।
इत्येवं कथितं सम्यङ् मंत्रसिद्धेस्तु लक्षणम् ॥ ९९ ॥
तदुपायं तथा ब्रह्मन् केवलं भाग्यतस्तव ।
अनेकतंत्रसंप्रोक्तमनेकमनुसंस्मृतम् ॥१००॥
इदानीन्तु पुनर्ब्रह्मन् किमन्यच्छ्रोतुमिच्छसि ॥१०१॥

इति श्रीगौतमीये महातंत्रे सर्वतंत्रोत्तमे गौतमनारदसंवादे मंत्रसिद्धिकथनं नाम त्रिंशत्तमोऽध्यायः ॥ ३० ॥

---

# अथ एकत्रिंशत्तमोऽध्यायः

गौतम उवाच—

देवर्षे सर्वतंत्रज्ञ सर्वशास्त्रार्थतत्त्ववित्।
कृष्णानुभावसंदर्शिन् विपादग्रंथिभेदकः ॥ १ ॥
सर्वं जानासि सर्वज्ञ विशेषात्कृष्णतत्त्ववित्।
इदानीं कथय ब्रह्मन् मंत्राचारानदर्शनम् ॥ २ ॥
वैष्णवं पीठममलं तदावासफलं तथा।
विस्तरेण मम ब्रह्मन्ननुक्तमपि तत्त्वतः ॥ ३ ॥
न गोप्यं तद्गुरोः शिष्ये यदि योग्योऽस्मि भाग्यतः।

श्रीनारद उवाच—

दीक्षया लब्धमंत्रस्य सदाचारं शृणुष्व मे ॥ ४ ॥
अनायासेन सिद्धिः स्यात्सदाचारस्य येन वै।
आचारांल्लभते काममाचारांल्लभते यशः ॥ ५ ॥
आचाराद्धनमाप्नोति दीर्घमायुरवाप्नुयात्।
सदाचारेण मनुजो विजयी लोकयुगे खलु ॥ ६ ॥
अनाचारो हि लोकेषु निन्दितः सर्वकर्मसु।
सर्वभूते याऽनुकंपा दाने चातिथिपूजने ॥ ७ ॥
पंचेज्या तीर्थसेवा च स्वाध्यायो गुरुपूजनम्।
सामान्यं सर्वलोकानामेष धर्मः सनातनः ॥ ८ ॥
ब्रह्मचारी दीक्षितश्चेत् त्रिसंध्यं देवमर्चयेत्।
स्नातं त्रिसवनं तद्वद्वेदाध्ययनमेव च ॥ ९ ॥
भक्ष्यं संप्रार्थयेत्साक्षाद् ध्यायेद्देवं निरन्तरम्।
पर्यटेद्विष्णुक्षेत्रेषु न प्रतिग्रहमाचरेत् ॥ १० ॥
गृहस्थो दीक्षया सर्वधर्मकर्माणि साधयेत्।
न जपो नार्चनं नैव ध्यानं नापि विधिक्रमः ॥ ११ ॥
केवलं सततं कृष्णचरणाम्भोजभागिनम्।
संन्यासिनां मुमुक्षूणां मानसोपद्धतिः स्मृता ॥ १२ ॥
परिव्राड्विविक्तश्च तथा गृही भवेत्सदा।
उभौ तौ नरके घोरे पच्येते शाश्वतं ध्रुवम् ॥ १३ ॥

गृहस्थो धर्मपत्नीभिः पूजयेद्देवमन्वहम् ।
दद्याद्दानं महार्हाय येन कृष्णः प्रसीदति ॥ १४ ॥
संन्यासिनां द्रव्यदाने नाधिकारीति सुव्रत ।
वर्णानां च वनस्थानां को वदेत्तदपेक्षितम् ॥ १५ ॥
किंतु वैष्णवमंत्रेषु विरला अधिकारिणः ।
संसारवासनारज्जुबद्धं लोलं मनो नृणाम् ॥ १६ ॥
ततो यदि विमुक्तं स्याद् द्वंद्वं स्याद्देवपादयोः ।
तत्रैवान्यो विशेषोऽस्ति श्रूयतां चावधार्य्यताम् ॥ १७ ॥
सर्वसंसारदोषो हि नारीमूलं सदा भवेत् ।
शक्यते रक्षितुं चेतस्तदा वैष्णवसाधकः ॥ १८ ॥
अचंचलं मनो यस्य योषित्संगं विवर्जितम् ।
योषितां ध्याननिर्मुक्तं तच्छब्दश्रुतिवर्जितम् ॥ १९ ॥
तदैव साधकः कुर्य्यात्साधनं सुसमाहितः ।
वलयध्वनयो नैव श्रूयन्ते यत्र योषिताम् ॥ २० ॥
न स्त्रीमुखं निरीक्षेत न स्त्रियं मनसा स्मरेत् ।
ब्रह्मचारी मिताहारी हविष्याशी जितेन्द्रियः ॥ २१ ॥
साधकः साधनं कुर्यात् त्यागी योगपरायणः ।
कदाचिद्यदि उच्चंतस्खलनं वाथ जायते ॥ २२ ॥
प्राणायामं विशेषेण समभ्यस्येत्तु साधकः ।
स हि पातकदारूणि दहनः परिकीर्तितः ॥ २३ ॥
समस्तपापराशीनां मनोवाक्कायकर्मणाम् ।
प्राणसंयममात्रं हि प्रायश्चित्तं सुनिश्चितम् ॥ २४ ॥
पुण्यतीर्थेऽथ पुलिने सरितां देवसद्मनि ।
नद्यास्तटेऽथ विवरे विपिने तुलसीवने ॥ २५ ॥
गोष्ठे तथैवोपवने गिरिकाननदिकतटे ।
विशेषतो द्वारवत्यां तथा गोवर्द्धने गिरौ ॥ २६ ॥
यद्वा कलिन्दकन्यायाः कानने पुलिने तथा ।
वृन्दावने गोकुले वा मथुरायामथापि वा ॥ २७ ॥
मथ्नानि सर्वपापानि ददाति परमं पदम् ।
उत्तमो हिततरो यत्र तत्र सा मथुरा स्मृता ॥ २८ ॥
बदरीखंडविपिने गंगाद्वारेऽथवा पुनः ।
व्यंकटे श्रीरंगे वा क्षेत्रे श्रीपुरुषोत्तमे ॥ २९ ॥

उत्तमः पुरुषो यत्र तत्क्षेत्रं पुरुषोत्तमम् ।
एषु स्थानेषु विप्रर्षे नित्यं सन्निहितो हरिः ॥ ३० ॥
अत एव साधकेन्द्रो निवसेत्तदपेक्षया ।
हरेः संदर्शनं यावन्निवसेत् सुखनिःस्पृहः ॥ ३१ ॥
स्थानान्येतानि शुद्धानि कृत्यं किंचिन्निगद्यते ।
विशेषतः पशुजनैर्नास्तिकैरन्यदीक्षितैः ॥ ३२ ॥
निन्दितं न समीक्षेत तदालापं च वर्जयेत् ।
स्त्रीसंगं वर्जयेच्चैव तत्कथा कथनं तथा ॥ ३३ ॥
जन्मासाद्य मनुष्येषु शुद्धे पितरि मातरि ।
वर्तमानेपि शुकृते तत्र वैन्द्रियपाटवे ॥ ३४ ॥
ब्रह्मन् ब्रह्मणि कृष्णे च गोपाले देवकीसुते ।
त्रिवर्गफलदे किम्वा बहुनात्मपदप्रदे ॥ ३५ ॥
यो नार्चयति कल्पः सन् तस्मात्पापतरो हि कः ।
असारे घोरसंसारे सारं कृष्णपदार्चनम् ॥ ३६ ॥
तत्पदं वार्चितं येन पवित्रं सर्वबोधकम् ।
तत्पदं नार्चितं येन पापिना पापकर्मणाम् ॥ ३७ ॥
शरीरभारवहन जन्म तस्य निरर्थकम् ।
गोपालं पूजयेद्यस्तु निन्दयेदन्यदेवताः ॥ ३८ ॥
अस्तु तस्य परो धर्मः पूर्वधर्मो विनश्यति ।
प्रत्यहं क्षालयेच्छय्यामेकाकी निर्भयः स्वपेत् ॥ ३९ ॥
नाधिरोहेत्तु पर्य्यंके रक्तवासो च धारयेत् ।
न रक्तचन्दनं हस्ते गृह्णीयाद्रक्तपुष्पकम् ॥ ४० ॥
बिल्वपत्रैस्तत्प्रसूनैर्नार्चयेद् देवकीसुतम् ।
नैव द्विरशन कुर्य्यात्पर्ववर्जमृतौ तथा ॥ ४१ ॥
तथा विशेषयेद्धर्मपत्नीं धर्मरिरक्षया नरः ।
ततः परदिने कृत्यं कुर्यात्स्नानोत्तरं सुधीः ॥ ४२ ॥
शरीरोद्वर्त्तनं कृत्यं स्नात्वा नद्यादिवारिणि ।
नियतं यागकाले तु न कुर्यादन्यप्रेक्षणम् ॥ ४३ ॥
नैवाश्लीलं वचो ब्रूयादालापं च निरर्थकम् ।
न वृथागमयेत्कालं केवलं ध्यानतत्परः ॥ ४४ ॥
केवलं श्रीपदाम्भोजन्यस्तचेताभवेत्सुधीः ।
यद्यत्कर्मणि वैगुण्यं नित्यनैमित्तिकेपि वा ॥ ४५ ॥

सहस्रं प्रजपेन्मूलमनुं चायुतमेव वा ।
नित्ये सहस्रं प्रजपेन्नैमित्तिके तथायुतम् ॥ ४६ ॥
सर्वेषामेव पापानां शंकटे समुपस्थिते ।
प्रायश्चित्तं तु तत्प्रोक्तमयुतं मंत्रजापतः ॥ ४७ ॥
सुवर्णं वह्निना ध्यातं यथा भवति निर्मलम् ।
तथा सर्वगतं पापं प्रायश्चित्ताग्निना दहेत् ॥ ४८ ॥

तथैव तुलसीपुष्पैस्तथैव मालतीदलैः ।
तथैव तुलसीपत्रैः मालतीकुसुमैरपि ॥ ४९ ॥

यूथिकाभिर्मल्लिकाभिः पंकजैः कुसुमैरपि ।
चंपकैः केसरैश्चापि कर्णिकारैरशोककैः ॥ ५० ॥
कोविदारैः सहकारैस्तथा वकुलकैरपि ।
पाटलाभिर्जपाभिश्च बंधूकैः रक्तकैरपि ॥ ५१ ॥
अन्यैश्च विविधैः पुष्पैर्दर्शनीयैः सुगन्धिभिः ।
आरामजैर्विपिनजैर्निषिद्धपरिवर्जितैः ॥ ५२ ॥

इत्येवं कथितं पुष्पविधानं हरिपूजने ।
पशूनां हिंसनं नैव कुर्यात् कस्यापि पीडनम् ॥ ५३ ॥
कटुवाक्यं वर्जयेच्च ब्रूयान्मधुरभाषणम् ।
संस्कृतेनैव कथयेन्नान्यां भाषां वदेत् सुधीः ॥ ५४ ॥
आत्मदेवतयोरैक्यं गुरुदेवतयोरपि ।
ऐक्यं सम्भावयेद् बुद्ध्या न गुरोः शाकमासनम् ॥ ५५ ॥
एकग्रामे गुरोर्नित्यं गत्वा वन्देत् भक्तितः ।
योजनानामन्तरे भक्त्या मासं मासं च वन्दयेत् ॥ ५६ ॥
अतः परं तस्यां दिशि नमस्कुर्याच्च भक्तितः ।
अथवा मानसीं पूजां प्रकुर्य्यान्निजमूर्द्धनि ॥ ५७ ॥
पितृवंशे मातृवंशे शुद्धः सत्यपरायणः ।
न जारजो न कामीनो न राक्षसविवाहतः ॥ ५८ ॥

ब्राह्मणः क्षत्रियश्चैव वैश्यः शूद्रस्तथैव च ।
निरपेक्षो हरिं जप्त्वा हरिर्भवति ना परः ॥ ५९ ॥
गृह्णंस्तथा च नामानि तत्कथा श्रवणोत्सुकः ।
नमस्यंस्तत्पदाम्भोजं भक्तोऽयं प्रेमलक्षणः ॥ ६० ॥
पक्षद्वयेपि मतिमान्न लंघेद्धरिवासरम् ।
अपि चांडालगेहानां मातृणां गमनं वरम् ॥ ६१ ॥

न लंघेन्मतिमान् क्वापि संप्राप्तं हरिवासरम्।
वैष्णवो यदि भुंजीत एकादश्यां प्रमादतः॥ ६२॥
विष्ण्वर्चनं वृथा तस्य नरकं घोरमाप्नुयात्।
शुक्लोपचारसंभारैर्नित्यशो हरिमर्चयेत्॥ ६३॥
निवेद्य कृष्णे विधिवदन्नं भुंजति तत्स्वयम्।
अथवा सात्वते दद्याद् यदि लभ्येत भक्तितः॥ ६४॥
निवेदयेदुत्तमान्नं न कदन्नं कदाचन।
उत्तमं विधिना प्राप्तं कदन्नं मुनिदूषितम्॥ ६५।
शिलांछ विधिना प्राप्तमथवा यदयाचितम्।
स्वाचित्तोपचितं वाथ कृष्णाय परिकल्पयेत्॥ ६६॥
शूद्राल्लब्धं शिलाल्लब्धमथवार्द्धं पिकाचितम्।
इत्याद्यन्नं कदन्नं तु दानान्नरकमाप्नुयात्॥ ६७॥
रात्रौ हविष्यं भुंजीत चान्द्रायणफलार्थिभिः।
हरिभक्तस्य युक्तस्य विरुद्धं दिवसाशनम्॥ ६८॥
कर्तिके मासि विधिवदर्चयेत्कृष्णमन्वहम्।
ब्राह्मे मुहूर्ते चोत्थाय निर्वृत्य सकलाः क्रियाः। ६९॥
यजेत्सुशोभने स्थले पशुदृष्टिविवर्जिते।
सर्वोपचारैराराध्य प्रदीपान् घृतपूरितान्॥ ७०॥
अष्टोत्तरशतं दद्यादथवा शक्तितो मुने।
सहस्रं प्रजपेन्मंत्रं दशांशं होममाचरेत्॥ ७१॥
एवं नित्यक्रमं कुर्याद्दिवा मौनं समाचरेत्।
इत्थं विधिवदाराध्य यावन्मासं प्रपूजयेत्॥ ७२॥
स तु लोकमवाप्नोति पुनरावृत्तिवर्जितम्।
इह लोके वरान् भोगान् भुक्त्वा मनोरथातिगान्॥ ७३॥
अस्मिन् मासे चामलायां द्वादश्यां हरितोषणम्।
सर्वोपचारैः कुर्वीत वित्तशाठ्यविवर्जितः॥ ७४॥
अनेनार्चनमात्रेण भवबन्धात् प्रमुच्यते।
एतदर्चनमात्रं हि हरितोषणकारकम्॥ ७५॥
मार्गशीर्षे तथा प्रातः स्नात्वा चैव नरोत्तमः।
क्रमपूजां समासाद्य जपहोमौ समाचरेत्॥ ७६।
पायसं सगुडं मिश्रं प्रत्यहं विनिवेदयेत्।
एवं मासार्चनं कृत्वा भवेद् भाग्यालयः पुमान्॥ ७७॥

देहान्ते मोक्षमाप्नोति प्रसादाच्छार्ङ्गधन्वतः।
अथ भाद्रासिताष्टम्यां प्रादुरासीत् स्वयं हरिः ॥ ७८ ॥
ब्रह्मणा प्रार्थितः पूर्वं देवक्यां कृपया विभुः।
रोहिण्यृक्षे शुभतिथौ दैत्यानां नाशहेतवे ॥ ७९ ॥
महोत्सवं प्रकुर्वीत यत्नतस्तद्दिने शुभे।
राजन्यैर्ब्राह्मणैर्वैश्यैः शूद्रैश्चैव स्वशक्तितः ॥ ८० ॥
उपवासं प्रकुर्वीत न भोक्तव्यं कदाचन।
कृष्णे जन्मदिने यस्तु भुक्ते स तु नराधमः ॥ ८१ ॥
निवसेन्नरके घोरे यावदाभूतसम्प्लवम्।
अष्टमी रोहणीयुक्ता चार्द्धरात्रे यदा भवेत् ॥ ८२ ॥
उपोष्यतां तिथिं विद्धां कोटियज्ञफलं लभेत्।
सोमाह्नि बुधवारे वा अष्टमीरोहिणीयुता ॥ ८३ ॥
जयन्ती सा समाख्याता तां लभेत्पुण्य सञ्चयैः।
तस्यामुपोष्य यत्पापं लोके कोटिभवोद्भवम् ॥ ८४ ॥
विमुच्य निवसेद्विप्र वैकुंठे विरजे पुरे।
अष्टमी नवमीविद्धा उमामाहेश्वरी तिथिः ॥ ८५ ॥
सैवोपोष्या सदापुण्याकांक्षिभीरोहिणीं विना।
पर विद्धा सदा कार्य्या पूर्वविद्धा तु वर्जयेत् ॥ ८६ ॥
अष्टमी सप्तमीविद्धा हन्यात्पुण्यं पुरा कृतम्।
ब्रह्महत्या शतं दद्याद्धरिर्वैमुख्यकारणात् ॥ ८७ ॥
परेह्नि पारणां कुर्यात्तिथ्यन्ते वाऽथ ऋक्षतः।
यदृक्ष वातिथिर्वापि रात्रिं व्याप्य व्यवस्थिता ॥ ८८ ॥
केवलं ऋक्षयोगेन उपवासस्तिथिं विना।
न यत्र शुभकार्यं तु मुनिभिः परिकीर्तितम् ॥ ८९ ॥
दिवसे पारणं कुर्यादन्यथा पतनं भवेत्।
गवाह्निकं प्रदद्याच्च गवां कंडूतिमाचरेत् ॥ ९० ॥
विप्राय वेदविदुषे गां च दद्यात्पयस्विनीम्।
सवत्सां युवतीं रम्यां सगुणां सुप्रवलंकृताम् ॥ ९१ ॥
स्वर्णशृंगीं रौप्यखुरां वस्त्रेणाच्छाद्य यत्नतः।
ददाति विप्रवर्याय कृष्णप्रीत्यर्थमुत्तमम् ॥ ९२ ॥
इत्युक्त्वा विप्रवर्येभ्योऽद द्यात् गां च सदक्षिणाम्।
रात्रौ जागरणं कुर्यादर्चयेत्तत्समाहृतः ॥ ९३ ॥

स्वर्णप्रतिकृतिं कृत्वा तस्यां तत्र समर्चयेत् ।
वसुदेवं देवकीं च पूर्ववत्कारयेत्तथा ॥ ९४ ॥
सुवर्णनियमस्तत्र श्रूयतां मुनिसत्तम ।
पलैश्चतुर्भिर्गोपाल वदर्द्धेनाथ. देवकीम् ॥ ९५ ॥
वसुदेव तथा कुर्यादथवा विभवावधिः ।
ब्राह्मे मुहूर्ते चोत्थाय कृत्वावश्यं प्रसन्नधीः ॥ ९६ ।
स्नात्वा पूर्ववदाराध्य आहूय वेदपारगम् ।
कुटुम्बिनं दरिद्रं च विप्रं बहुगुणान्वितम् ॥ ९७ ॥
दत्वा तस्मै सुशीलाय दक्षिणामुक्तलक्षणाम् ।
प्रीयतां कृष्ण इत्युक्त्वा उत्सृज्य कृष्णमानसः ॥ ९८ ॥
घृतखंडाज्यभोज्यानि ब्राह्मणेभ्य निवेदयेत् ।
महांतमुत्सवं कुर्यात् प्रीतये शार्ङ्गधन्वतः ॥ ९९ ॥
पारणं च प्रकुर्वीत बन्धुभिः सह हृष्टवत् ।
एवं यः कुरुते भक्त्या शक्त्या च हरितोषणम् ॥१००॥
इह भुक्त्वा वरान् भोगान् साक्षाद्भूमिपुरन्दरः ।
एवमाराधनादेव भक्तिः स्यात्प्रेमलक्षणा ॥१०१॥
देहान्ते विहरेल्लोके वैकुंठे हरिमन्दिरे ।
इति ते कथितः कश्चिदाराधनविधिर्हरेः ॥१०२॥
केवलं तव यत्नेन किमन्यच्छ्रोतुमिच्छसि ॥१०३॥

इति श्रीगौतमीये महातंत्रे सर्वतंत्रोत्तमे गौतमनारदसम्वादे आराधनविधि-प्रसंगो नामैकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥

# अथ द्वात्रिंशत्तमोऽध्यायः

श्रीगौतम उवाच—

देवर्षे योगयुक्तात्मन् योगानुभवदर्शक ।
सांख्ययोगानुभवन प्रभोऽनुभवदर्शक ॥ १ ॥
सांख्ययोगविशेषज्ञ कर्मयोगनिषेवक ।
विना योगेन न सिद्धेत् कुंडलीचक्रचक्रिम ॥ २ ॥
मूलपद्मे कुंडलिनी यावन्निद्रायिता प्रभो ।
तावत्किंचिन्न सिद्धयेत मंत्रयंत्रार्चनादिकम् ॥ ३ ॥
जागर्ति यदि सा देवी बहुभिः पुण्यसंचयैः ।
तदा प्रसादमायान्ति मंत्रयंत्रार्चनानि च ॥ ४ ॥
शिववद्विहरेल्लोके अष्टैश्वर्य्यसमन्वितः ।
योगयोगाद् भवेन्मुक्तिः मंत्रसिद्धिरखंडिता ॥ ५ ॥
सिद्धे मनौ परावाप्तिरिति शास्त्रार्थनिश्चयः ।
तस्मात्कारुण्णं परं योगं कथयस्व मुनीश्वर ॥ ६ ॥
मुक्तात्मा येन विहरेत्स्वर्गे मर्त्ये रसातले ।
जीवन्मुक्तश्च देहान्ते परं निर्वाणमावहेत् ॥ ७ ॥

श्रीनारद उवाच—

कथयामि तवस्नेहाद् योगयोग्योसि गौतम ।
संसारोत्तरणे युक्तिः योगशब्देन कथ्यते ॥ ८ ॥
योगो हि नन्दतनयो निश्चितं विद्धि गौतम ।
न योगो नभसः पृष्ठे न भूमौ न रसातले ॥ ९ ॥
ऐक्यं जीवात्मनो राहुः योगं योगविशारदः ।
तत्प्रत्यूहाः षडाख्याता योगविघ्नकरा मुने ॥ १० ॥
कामक्रोधलोभमोहमदमात्सर्य्यसंज्ञकाः ।
योगांगैरेभिर्जित्वा तान् योगिनो योगमाप्नुयुः ॥ ११ ॥
यमनियमवासनप्राणायामाश्च ततः परम् ।
प्रत्याहारं धारणाख्यं ध्यानंसार्द्धं समाधिना ॥ १२ ॥
अष्टांगान्याहुरेतानि योगिनो योगसाधने ।
अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यं दयार्ज्जवम् ॥ १३ ॥

क्षमाधृतिर्मिताहारः शौचं चैते यमा दश।
तपः संतोपास्तिक्यं दानं देवस्य पूजनम्। १४ ॥
सिद्धान्तश्रवणं चैव ह्रीमतिश्च जपो हुतम्।
दशैते नियमा ज्ञेया योगशास्त्रविशारदैः ॥ १५ ॥
पद्मासनं स्वस्तिकाख्यं भद्रं वज्रासनं तथा।
वीरासनमिति प्रोक्तं क्रमादासनपंचकम् ॥ १६ ॥
उर्वोरुपरि विन्यस्य सम्यक् पादतले उभे।
अंगुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमात्ततः ॥ १७ ॥
पद्मासनमिति प्रोक्तं योगिनां हृदयंगमम्।
जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे ॥ १८ ॥
ऋजुकायो विशेद्योगी स्वस्तिकं तत्प्रचक्षते।
सीमन्तन्याः पार्श्वयोर्न्यस्य गुल्फयुग्मौ सुनिश्चितौ ॥ १९ ॥
वृषणाधः पार्ष्णिपाणिभ्यां युक्तेन परिबन्धयेत्।
भद्रासनं समुद्दिष्टं योगिभिः परिपूजितम् ॥ २० ॥
ऊर्वोः पादौ क्रमान्न्यस्य जान्वोः प्रत्यङ्मुखांगुलीः।
करौ विदध्यादाख्यातं वज्रासनमनुत्तमम् ॥ २१ ॥
एकं पादमधः कृत्वा विन्यस्योरौ तथेतरम्।
ऋजुकायो विशेद्योगी वीरासनमितीरितम् ॥ २२ ॥
इड्या कर्षयेद्वायुं बाह्यं षोडशमात्रया।
साधयेत् पूरितं योगी चतुःषष्ठ्या तु मात्रया ॥ २३ ॥
सुषुम्ना मध्यगं सम्यग्द्वात्रिंशन्मात्रया शनैः।
नाड्या पिंगलया चैवं रेचयेद्योगवित्तमः ॥ २४ ॥
प्राणायाममिमं प्राहुर्योगशास्त्रविशारदाः।
भूयो भूयः क्रमात्तस्य वह्यमेनं समानयेत् ॥ २५ ॥
मात्रावृद्धिक्रमेणैव सम्यग्द्वादशषोडश।
जपध्यानादिभिः सार्द्धं सगर्भं तं विदुर्बुधाः ॥ २६ ॥
तदपेतं विगर्भं च प्राणायामं परे विदुः।
क्रमादभ्यसतः पुंसो देहे स्वेदोद्गमोऽधमः ॥ २७ ॥
मध्यमः कंपसंयुक्तो भूमित्यागः परो मतः।
उत्तमस्य गुणावाप्तिर्यावच्छीलनमिष्यते ॥ २८ ॥
इन्द्रियाणां विचरतां विषयेषु निरर्गलम्।
बलादाहरणं तेभ्यः प्रत्याहारो विधीयते ॥ २९ ॥

अंगुष्ठगुल्फजानूरूसीमन्तीलिंगनाभिषु ।
हृद्ग्रीवाकंठदेशेषु लम्बिकायां ततो नसि ॥ ३० ॥
भ्रूमध्ये मस्तके मूर्द्धिन द्वादशान्ते यथाविधि ।
धारणं प्राणमरुतो धारणेति निगद्यते ॥ ३१ ॥
समाहितेन मनसा चैतन्यांतरवर्तिना ।
आत्मन्यभीष्टदेवानां ध्यानाद् ध्यानमिहोच्यते ॥ ३२ ॥
समत्वभावना नित्यं जीवात्मपरमात्मनोः ।
समाधिमाहुर्मुनयः प्रोक्तमष्टांगलक्षणम् ॥ ३३ ॥
इत्यादि कथितं विप्र. कामादिदुष्टनाशनम् ।
इदानीं कथयेऽहं ते मन्त्रयोगमनुत्तमम् ॥ ३४ ॥
विश्वं शरीरमित्युक्तं पंचभूतात्मकं मुने ।
चन्द्रसूर्य्याग्नितेजोभिः जीवब्रह्मैक्यरूपकम् ॥ ३५ ॥
तिस्रः कोट्यास्तदर्द्धेन शरीरे नाड्यो मताः ।
तासु मुख्यादशप्रोक्ताः ताभ्यास्तिस्रो व्यवस्थिताः ॥ ३६ ॥
प्रधाना मेरुदण्डेत्र चन्द्रसूर्याग्निरूपिणी ।
इडा वामे स्थिता नाडी शुभ्रा तु चन्द्ररूपिणी ॥ ३७ ॥
शक्तिरूपा तु सा नाडी साक्षादमृतविग्रहा ।
दक्षिणे या पिंगलाख्या पुरुषा सूर्य्यविग्रहा ॥ ३८ ॥
दाडिमी केसरप्रख्या विषाख्या मुनिभिः स्मृता ।
मेरुमुखे स्थिता या तु मूलाक्षा रंध्रविग्रहा ॥ ३९ ॥
सर्वतेजोमयी सा तु सुषुम्ना वह्निरूपिणी ।
तस्य मध्ये विचित्राख्या अमृतस्राविणी शुभा ॥ ४० ॥
सर्वदेवमयी सा तु योगिनां हृदयंगमा ।
विसर्गादिबिन्दुपर्य्यन्त्वा व्याप्य तिष्ठति तत्त्ववः ॥ ४१ ॥
मूलाधारे त्रिकोणाख्ये इच्छाज्ञानक्रियात्मकम् ।
मध्ये स्वयंभूलिंगं तु कोटिसूर्य्यसमप्रभम् ॥ ४२ ॥
तदूर्द्ध्वं कामबीजं तु कलशांत बिन्दुनायकम् ।
तदूर्द्ध्वं तु विशिखा कारा कुंडली श्यामविग्रहा ॥ ४३ ॥
कृष्णात्मिका परा सा तु कृष्णतत्त्वात्मवेदिका ।
तद्बाह्ये हेमरूपाभं विशेषे च चतुर्दलम् ॥ ४४ ॥
द्रुतहेमसमप्रख्यं पद्मं तत्र विभावयेत् ।
तदूर्द्ध्वं त्वनलप्रख्यं षड्दल हीरकप्रभम् ॥ ४५ ॥

वादिलां तव वर्णेन स्वाधिष्ठानमनुत्तमम् ।
मूलमाधारपद्मानां मूलाधारं ततो विदुः ॥ ४६ ॥
स्वशब्देन परं लिंगं स्वाधिष्ठानं ततो विदुः ।
तदूर्द्ध्वं नाभिदेशे तु मणिपूरं महाप्रभम् ॥ ४७ ॥
मेघाभं वैद्युताभं च वह्नितेजोभयं ततः ।
मणिवद्भिन्नतत्पद्मं मणिपूरं तथोच्यते ॥ ४८ ॥
दशभिश्च दलैर्युक्तं डादिफांनाक्षरावृतम् ।
विष्णुनाधिष्ठितं पद्मं विष्ण्वालोकनकारणम् ॥ ४९ ॥
तदूर्ध्वेनाहतं पद्ममुद्यताभिन्नसन्निभम् ।
कादिठांतदलैरर्कपत्रेण समधिष्ठितम् ॥ ५० ॥
तन्मध्ये वाणलिंगं सूर्यायुतसमप्रभम् ।
शब्दब्रह्ममयं शब्देनाहतं तत्र दृश्यते ॥ ५१ ॥
तेनानाहताख्यं तत्पद्मं मुनिभिः परिकीर्तितम् ।
आनन्दसदनं तत्तु पुरुषाधिष्ठितं परम् ॥ ५२ ॥
तदूर्द्ध्वे तु विशुद्धाख्यं दलषोडशपंकजम् ।
स्वरैः षोडशभिर्युक्तं धूम्रवर्णं महत्प्रभम् ॥ ५३ ॥
विशुद्धं तनुते यस्माज्जीवस्य हंसलोकनात् ।
विशुद्धं पद्माख्यातमाकाशाख्यं महाद्भुतम् ॥ ५४ ॥
आज्ञाचक्रं तदूर्द्ध्वे तु आत्मनाधिष्ठितं परम् ।
आज्ञासंक्रमणं तत्र तेनाज्ञेति प्रकीर्तिता ॥ ५५ ॥
द्विदलं हसद्व्यक्षरसंयुक्तं पंकजं सुमनोहरम् ।
कैलासाख्यं तदूर्ध्वे तु रोधनी तु तदूर्ध्वतः ॥ ५६ ।
एवं तु कृष्णचक्राणि प्रोक्तानि तव सुव्रत ।
सहस्रारांबुजं विन्दुस्थानं तदूर्ध्वमीरितम् ॥ ५७ ॥
इत्येतत्कथितं सर्वं योगमार्गमनुत्तमम् ।
आदौ पूरकयोगेन स्वाधारे योजयेन्मनः ॥ ५८ ॥
गुदमेढ्रान्तरे शक्तिः तामाकुंच्य प्रबोधयेत् ।
लिंगभेदक्रमेणैव विन्दुचक्रं च प्रापयेत् ॥ ५९ ॥
शम्भुना तां परां शक्तिमेकीभावं विचिन्तयेत् ।
तत्रोत्थितामृतं यत्तु द्रुतं लाक्षारसोपमम् ॥ ६० ॥
पाययित्वा तु तां शक्तिं कृष्णाख्यां योगसिद्धिदाम् ।
षट्चक्रदेवतास्तत्र संतर्प्यामृतधारया ॥ ६१ ॥

आनेयेत्तेन मार्गेण मूलाधारं ततः सुधीः ।
पुनस्तेनैव मार्गेण नयतां शांभवं सुधीः ॥ ६२ ॥
एवमभ्यस्यमानस्याहन्यहनि . निश्चितम् ।
जरामरणदुःखाद्यैर्मुच्यते भवबन्धनात् ॥ ६३॥
पूर्वोक्तरूपता मंत्राः सर्वे शुध्यन्ति नान्यथा ।
ये गुणाः संति देवस्य पंचकृत्यविधायिनः ॥ ६४ ॥
ते गुणाः साधकवरे भवंत्येव न चान्यथा ।
इत्येवं कथितं विप्र वायुधारणमुत्तमम् ॥ ६५ ॥
इदानीं धारणाख्यं तु शृणुष्वावहितो मम ।
दिक्कालाद्यानवच्छिन्ने कृष्णे चेतो विधाय च ॥ ६६ ॥
तन्मयो भवति क्षिप्रं जीवब्रह्मैक्ययोजनात् ।
अथवा सबलं चेतो यदि क्षिप्रं न सिद्ध्यति ॥ ६७ ॥
तदावयवयोगेन योगी 'योगं' समभ्यसेत् ।
पादाम्भोजे मनोद्यान्नखकिंजल्कचित्रिते ॥ ६८ ॥
जंघायुग्मे तदारामकदलीखंडशोभिते ।
गंगावर्तगम्भीरे तु नाभौ सिद्धिविले ततः ॥ ६९ ॥
ऊरुद्वये मत्तहस्तिकरदण्डसमप्रभे ।
उदरे वक्षसि तथा हारश्रीवत्सकौस्तुभे ॥ ७० ॥
पूर्णचन्द्रायुतमुखे ललाटे चारुकुण्डले ।
शंखचक्रगदाम्भोजदोर्दण्डपरिमंडिते ॥ ७१ ॥
सहस्रादित्यसंकाशे'. किरीटे कुण्डलद्वये।
स्थानस्थानजपान्मत्री विशुद्धशुद्धचेतसा ॥ ७२ ॥
मनो निवेश्य कृष्णे चेत्तन्मयो भावतिध्रुवम् ।
यावन्मनोलयं याति कृष्णे स्वात्मनि चिन्तयेत् ॥ ७३ ॥
तावदिष्टमनुं मंत्री विशुद्धशुद्धचेतसा ।
मनो निवेश्य कृष्णे चेत्तन्मयो भवति ध्रुवम् ॥ ७४ ॥
यावन्मनोलयं याति कृष्णे स्वात्मनि चिन्तयेत् ।
तावदिष्टमनुं मंत्री जपहोमैः समभ्यसेत् ॥ ७५ ॥
अतः परं न किंचित्तत्कृत्यमस्ति यतो हरिः ।
विदिते परतत्त्वे तु समस्तैर्नियमैरलम् ॥ ७६ ॥
तालवृंतेन किं कार्य्यं लब्धे मलयमारुते ।
मंत्राभ्यासेन योगेन ज्ञेयज्ञानाय कल्पते ॥ ७७ ॥

११ गौ०

न योगेन विना मंत्रो न मंत्रेण विना हि सः।
द्वयोरभ्यासयोगो हि ब्रह्मसंसिद्धिकारणम् ॥ ७८ ॥
तमः परिवृते गेहे घटो दीपेन दृश्यते।
एवं मायावृतो ह्यात्मा मनुना गोचरी कृतः ॥ ७९ ॥
एवं ते कथितं ब्रह्मन् मंत्रयोगमनुत्तमम्।
दुर्लभं विषयासक्तैः सुलभस्त्वादृशामपि ॥ ८० ॥
अथापरं प्रवक्ष्यामि समाधिर्भवनाशनम्।
समाधिः संविदुत्पत्तिः परजीवैक्यतां व्रजेत् ॥ ८१ ॥
यदि जीवः पराद्भिन्नः कार्य्यतामेति सुव्रत।
अचितत्वं प्रसज्जेत घटवत्पंडितोत्तमः ॥ ८२ ॥
विनाशित्वमयं चैव द्वितीयाद्वा इति श्रुतिः।
नित्यं सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः ॥ ८ ॥
एकः संपद्यते भ्रांत्या मायया न स्वरूपतः।
तस्माद् द्वैतं नाम नास्ति न प्रपंचो न संसृतिः ॥ ८४ ॥
यथाकाशो घटाकाशो महाकाश इतोर्य्यते।
तथा भ्रान्तैर्द्विधा प्रोक्तो ह्यात्मा जीवेश्वरात्मना ॥ ८५ ॥
नाहं नेहो नच प्राणो नेन्द्रियाणि तथैव च।
न मनोहं न बुद्धिश्च नैव चित्रमहं कृतिः ॥ ८६ ॥
नाहं पृथ्वी न सलिलं नच वह्निस्तथानिलः।
न चाकाशो न शब्दश्च न स्पर्शस्तथा रसः ॥ ८७ ॥
नाहं गन्धो न रूपं च न मायाहं न संसृतिः।
सदा साक्षी स्वरूपत्वात् कृष्ण एवास्मि केवलः ॥ ८८ ॥
इति धार्य्यं मुनिश्रेष्ठ स समाधिरिहोच्यते।
अथवा पञ्चभूतेभ्यां जातमंडं महामुने ॥ ८९ ॥
भूतमात्रं तथा दग्ध्वा विवेकेनैव वह्निना।
पुनः स्थूलानि भूतानि सूक्ष्मभूतात्मना तथा ॥ ९० ॥
विना चैव विवेकेन ततस्तान्यपि बुद्धिमान्।
मायामात्रतया दग्ध्वा मायात्वं प्रत्यगात्मना ॥ ९१ ॥
सोहं कृष्णे न संसारी न मत्तोन्यत्कदाचन।
इति विद्यात्स्वमात्मानं स समाधिः प्रकीर्तितः ॥ ९२ ॥
अथवा योगिनां श्रेष्ठः कृष्णप्रणवमाश्रयेत्।
पंचवर्णात्मना विद्यात् ककारादिक्रमेण तु ॥ ९३ ॥

अनिरुद्धः ककारस्तु विश्वाख्यो मूलविग्रहः।
प्रद्युम्नाख्यो लकारेण अंतःकरणवृत्तिकाः ॥ ९४ ॥
अंतःकरणवृत्या तु प्रद्युम्नः तैजसात्मकः।
संकर्पणो लयाख्यस्तु निर्विकल्पस्वरूपकः ॥ ९५ ॥
सुपुप्तौ सुखरूपोसौ तुरीयस्त्वर एव हि।
तुरीयाख्यो वासुदेवो चिद्वात्मा ब्रह्म केवलम् ॥ ९६ ॥
प्राज्ञात्मानं वदन्त्येके चित्तद्‌ब्रह्म केवलम्।
जीवमीश्वरभावेन विद्यात्तेसोऽहमिति ध्रुवम् ॥ ९७ ॥
एषा तु बुद्धिर्विद्भिः समाधिरिति कीर्तितः।
यथा फेनतरंगादि समुद्रादुत्थितं पुनः ॥ ९८ ॥
समुद्रे लीयते तद्वज्जगदात्मनि लीयते।
तस्मान्मत्तः पृथङ्नास्ति जगन्माया च सर्वदा ॥ ९९ ॥
इति बुद्धिः स्यादात्मसमाधिरिहोच्यते।
यस्यैवं परमात्मा चापृथक्भूतः प्रकाशितः ॥ १०० ॥
स याति परमं भावं स्वयं साक्षात्परामृतम्।
यदा मनसि चैतन्यं भाति सर्वत्रगं सदा ॥ १०१ ॥
योगिनोऽव्यवधानेन तदा संपद्यते स्वयम्।
यदा सर्वाणि भूतानि स्वात्मन्येव हि पश्यति ॥ १०२ ॥
सर्वभूतेपु चात्मानं ब्रह्म संपद्यते तदा।
यदा सर्वाणि भूतानि समाधिस्थो न पश्यति ॥ १०३ ॥
एकीभूतपरेणासौ. तदा भवति केवलम्।
यदा जन्मंजरादुःखव्याधीनामेकभेपजम् ॥ १०४ ॥
केवलं ब्रह्मविज्ञानं जायतेऽसौ तदा हरिः।
तस्माद्विज्ञानतो मुक्तिः नान्यथा भवकोटिभिः ॥ १०५ ॥
कर्मसाध्यस्य नित्यत्वं केचिदिच्छन्ति तांत्रिकाः।
ज्ञानं वेदान्तसिद्धान्तमज्ञानमितरं मुने ॥ १०६ ॥
अहो ज्ञानस्य माहात्म्यं मया वक्तुं न शक्यते।
यथा वह्निर्महादीप्तः शुष्ककाष्ठं विनिर्दहेत् ॥ १०७ ॥
तथा शुभाशुभं कर्म ज्ञानाग्निर्दहति क्षणात्।
पद्मपत्रं यथा तोयैः स्वल्पैरपि न लिप्यते ॥ १०८ ॥
तथा शब्दादिभिर्ज्ञानं विपयैर्न विलिप्यते।
मंत्रौपधिबलैर्यज्जीर्य्यते भक्षितं विपम् ॥ १०९ ॥

तद्वत्सर्वाणि पापानि जीर्य्यन्ते ज्ञानिनः क्षणात् ।
वाहुनोक्तेन किं सर्वसंग्रहेणोपपादितम् ॥ ११० ॥
श्रद्धया गुरुभक्त्या तु विद्धि कैवल्यसंग्रहम् ।
देहाभिमाने गलिते विदिते परमात्मनि ॥ १११ ॥
यत्र यत्र मनो याति तत्र तत्र समाधयः ।
अहं कृष्णो न चान्योऽस्मि मुक्तोऽहमिति भावयेत् ॥ ११२ ॥
सच्चिदानन्दरूपोऽहं नित्यमुक्तः स्वाभाववान् ।
त्वमेवाहमहं त्वं च सच्चिन्मात्रवपुर्भवान् ॥ ११३ ॥
आवयोरंतरा कृष्ण नश्यत्वाज्ञायलात्तव ।
एवं समाधियुक्तोयं समाधानाय कल्पते ॥ ११४ ॥
सदा कृष्णोहमित्युक्त्वा स्वेच्छया विहरेद्यतिः ।
लिप्यते न स पापेन कर्मणा चैव विशेषतः ॥ ११५ ॥
यथाग्निना द्रुतं स्वर्णं मालिन्यं हरति क्षणात् ।
तथा कृष्णार्पितात्माऽसौ कर्मभिर्न च वद्धयते ॥ ११६ ॥
आत्मस्थां देवतां त्यक्त्वा वहिर्देवं विचिन्वते ।
करस्थं कौस्तुभं त्यक्त्वा भ्रमते काचचेष्टया ॥ ११७ ॥
एवं ते कथितं ब्रह्मन् ब्रह्मप्राप्तिनिदर्शनम् ।
विज्ञाय गुरुतो भक्त्या संसारसागरं तरेत् ॥ ११८ ॥
यत्र तत्र मृतश्चायं श्मशाने श्वपचालये ।
ब्रह्मविद् ब्रह्मभूपाय कल्पते नान्यथा मुने ॥ ११९ ॥
इति विज्ञाय विधिना ज्ञानविज्ञानलोकतः ।
आनन्दोन्मेषसंदर्शी विहरेत्काश्यपीमिमाम् ॥ १२० ॥
अपक्वयोगी यदि चेन्म्रियते ज्ञानवर्जितः ।
मंत्रेण तस्य विधिवत्कुर्य्यात्तत्सांपरायिकम् ॥ १२१ ॥
प्रतिमां तस्य विधिवत्कुर्य्यात्तत्सांपरायिकम् ।
प्रतिमां तस्य यत्नेन कल्पयेत्पटकेन तु ॥ १२२ ॥
त्रिरात्रं दशरात्रं वा कृष्णं सर्वोपचारकैः ।
विधिज्ञः पूजयेद्भक्त्या तन्मंत्रेण च साधकः ॥ १२३ ॥
गुरुतश्चैकतां नीत्वा कृष्णे चैकात्मतां नयेत् ।
जीवन्मुक्तिक्रियात्वेषा प्रेतत्वादिविमोक्षणे ॥ १२४ ॥
ततश्च कृष्णभूतोऽसौ जायते नान्यथा मुने ।
अन्नं दद्यात्सात्वतेभ्यो वहुमानपुरस्सरम् ॥ १२५ ॥

क्षीरखंडाज्यभोज्यैश्च वस्त्रालंकरणादिभिः ।
एतत्ते कथितं तंत्रं सर्वतंत्रोत्तमोत्तमम् ॥ १२६ ॥
अस्य विज्ञानमात्रेण कृष्णात्मैक्यं समश्नुते ।
न प्रकाश्यमिदं तंत्रं न देयं यस्य कस्यचित् ॥ १२७ ॥
मंत्राः पराङ्मुखा यांति आपदश्च पदे पदे ।
इह लोके च दारिद्र्यं परत्र पशुतां व्रजेत् ॥ १२८ ॥
यद्गृहे तिष्ठते ग्रन्थं लिखितं तस्य वेश्मनि ।
कमलापि स्थिरा भूत्वा कृष्णेन सह मोदते ॥ १२९ ॥
इत्येवं कथितं ग्रन्थं मया ते मुनिसत्तम ।
अस्यालोकनतश्चित्तं कृष्णात्मा सुप्रसीदति ॥ १३० ॥

इति श्रीगौतमीये महातंत्रे सर्वतंत्रोत्तमे
गौतमनारदसंवादे द्वात्रिंशोऽध्यायः
समाप्तश्चायं ग्रन्थः ।



